परतोऽपि परश्चासि विधाता वेधसामपि ॥ १४ ॥
त्वमेव हव्य होता च भोज्य भोक्ता च शाश्वत ।
वेद्य त्व वेदिता चासि ध्याता ध्येय च यत्परम् ॥ १५ ॥
इति तेभ्य स्तुती श्रुत्वा यथार्था हृदयगमा ।
प्रसादाभिमुखो वेधा प्रत्युवाच दिवौकस ॥ १६ ॥
पुराणस्य कवेस्तस्य चतुर्मुखसमीरिता ।
प्रवृत्तिरासीच्छब्दाना चरितार्था चतुष्टयी ॥ १७ ॥
स्वागत स्वानधीकारान् प्रभावैरवलम्ब्य व ।
युगपद् युगबाहुभ्य प्राप्तेभ्य प्राज्यविक्रमा ॥ १८ ॥
किमिति द्युतिमात्मीया न बिभ्रति यथा पुरा ।
हिमक्लिष्टप्रसादानि ज्योतीषीव मुखानि व ॥ १९ ॥
प्रशमादर्चिषामेतदनुद्गूर्णसुरायुधम् ।
वृत्रस्य हन्तु कुलिश कुण्ठिताश्रीव लक्ष्यते ॥ २० ॥

15 *c* F त्व वेद्य वे—, majority वेद्य च वेदिता चासि, B 1, I 8 वेद्य वेदयिता चासि with Mal वेदयिता साक्षात्कर्ता, Br वेदयिता ज्ञाता, चुरादि, Bhar वेदयिता ज्ञापक फलदातेत्यर्थ, Gop वेदयिता ध्याता but Mal in others वेदिता *d* F, I 8 तत् परम्

16 *b* So Va 2, G, Bh, I 8, Mal followed by Bhar, but Br and Gop —यद्ह— *c* I-5, I 6, I 7, Vā 3 ब्रह्मा प्रत्यु—

17 See Rv X, 36

18 *c* and *d* of 18 and the whole of 19 is omitted by I 6

19 *a* I-5 I 7, I 8 किमिमा followed by commentators G, Bh, F किमिद, so read by Mal in I 8 *c* So Vā 3 P 3, P 5, Bh, F G, S, T —प्रकाशानि, —प्रभावानि Va-1, I 8 followed by Mal Br, Bhar

20 *b* So Bhar in I 8 from उद्गुर् 'raise', F notes अनुद्गीर्णागुरा— as variant, Bṛhaspati and Gopāla in I 8 have अवगूणसु— (अवगूर्णानि आच्छादितानि ) while Bharata reads अनुद्गूर्ण— (= अनुद्यत) explaining also अवगूण *d* Vā-2—तास हि ल—, P-4 corrects—नश्री—into—ताश्री—, Vā 3 P 3 I 6, H 2—तश्री—

किं चायमरिदुर्वारः पाणौ पाशः प्रचेतसः ।
मन्त्रेण हतवीर्यस्य फणिनो दैन्यमाश्रितः ॥ २१ ॥
कुबेरस्य मनःशल्यं शंसतीव पराभवम् ।
अपविद्धगदो बाहुर्भग्नशाख इव द्रुमः ॥ २२ ॥
यमोऽपि विलिखन् भूमिं दण्डेनास्तमितत्विषा ।
कुरुतेऽस्मिन्नमोघेऽपि निर्वाणालातलाघवम् ॥ २३ ॥
अमी च कथमादित्याः प्रतापक्षतिशीतलाः ।
चित्रन्यस्ता इव गताः प्रकामालोकनीयताम् ॥ २४ ॥
पर्याकुलत्वान्मरुतां वेगभङ्गोऽनुमीयते ।
अम्भसामोघसंरोधः प्रतीपगमनादिव ॥ २५ ॥
आवर्जितजटामौलिविलम्बिशशिकोटयः ।
रुद्राणामपि मूर्धानः क्षतहुंकारशंसिनः ॥ २६ ॥
लब्धप्रतिष्ठाः प्रथमं यूयं किं बलवत्तरैः ।
अपवादैरिवोत्सर्गाः कृतव्यावृत्तयः परैः ॥ २७ ॥
तद् ब्रूत वत्साः किमितः प्रार्थयध्वं समागताः ।
मयि सृष्टिर्हि लोकानां रक्षा युष्मास्ववस्थिता ॥ २८ ॥

22 *d* F द्रिम-

24 *b* F, Vā-3—नत—, Br in I 8, I-5—क्षिति—, I-6—गत—, H 2 comments क्षत नाम हत शीतला, cp XVII, 51 हृत—हत ? *c* I-5, I-8 इवाबाना- *d* I 2, I-5, I-6, I 7, I-8—दर्शिन Compare Mallinatha on these two readings In I-8 he supports—दर्शिन while in S, G, T he goes with —नीयताम्

26 *d* Vā-2, P 2, H 2, I 8—कृताहुंकार—followed by four commentators, P-3, I-5, Vā-3 (comment)—घताहुंकार—

27 *b* I-6, I 7 न खलु स्थ रणात्तरैः, न खलु स्थ बलात्तरैः I-8 followed by all commentators *c* *See* Rv V, 7

28 *b* P 2, P 3, I 2 G प्रार्थयध्वे, P-4 corrects—ध्वे into—ध्वम्, cp XII 36-37 *c* H 2 समाना *d* F—स्थिता-

ततो मन्दानिलोद्धूतकमलाकरशोभिना ।
गुरु नेत्रसहस्रेण प्रेरयामास वृत्रहा ॥ २९ ॥
स द्विनेत्र हरेश्चक्षु सहस्रनयनाधिकम् ।
वाचस्पतिरुवाचेद प्राञ्जलिर्जलजासनम् ॥ ३० ॥
एव यदात्थ भगवन्नामृष्ट न परै पदम् ।
प्रत्येक विनियुक्तात्मा कथ न ज्ञास्यसि प्रभो ॥ ३१ ॥
त्वया दत्तवरोद्गूर्णस्तारकाख्यो महासुर ।
उपप्लवाय लोकाना धूमकेतुरिवोत्थित ॥ ३२ ॥
पुरे तावन्तमेवास्य तनोति रविरातपम् ।
दीर्घिकाकमलोन्मेषो यावन्मात्रेण साध्यते ॥ ३३ ॥
सर्वाभि सर्वदा चन्द्रस्त कलाभिर्निषेवते ।
नादत्ते केवला लेखा हरचूडामणीकृताम् ॥ ३४ ॥
व्यावृत्तगतिरुद्याने कुसुमस्तेयसाध्वसात् ।
न वाति वायुस्तत्पार्श्वे तालवृन्तानिलाधिकम् ॥ ३५ ॥

29 *d* I 3, I 8 प्रेरयामास वासव noting देशयामास as a variant, G नोदयामास वृत्रहा, Bh चोदयामास वासव

30 *a* I 5, I 6, I 7, I 8 द्विनेत्रो with Mal —त्र *b* I-5, I 6, I 7 दशचक्षु शताधिकम्, I 8 notes चतुर्दशशताधिक as a variant

31 *b* I 3, I 8 समृष्ट, but Mal आमृष्टमाक्षिप्त, Br आमृष्ट विलुप्त, Bhar आकृष्ट गृहीत; I 6 आवृष्ट *d* F ज्ञास्यसे, P 5, I-5, I 6 I 7 ज्ञास्यति प्रभु, noted by I 8 and followed by Br and Bhar

32 *a* So P 2 H 2 with comment उद्गूण उदय प्राप्त, cp note on II, 20 with Mallinātha on it अनुद्गीर्ण =अनुदित Majority with F उदीर्ण, Vā 3, Bh भवल्लब्धवरोदीण, noted by I 8 B 1 भवल्लब्धत्वयादत्तवरोदीण mixture of the two variants *c* P-4 उपद्रवाय

34 *c* F रेखा

35 Śloka omitted by Vā 3, I 2

पर्यायमेवामुन्मृज्य पुष्पमभारनम्परा ।
उद्यानपाल्सामान्यमृनवम्नमुपामते ॥ ३६ ॥
तम्योपायनयोग्यानि रत्नानि मरिता पति ।
क्थमप्यम्भसामन्तरानिष्पत्ते प्रतीक्षते ॥ ३७ ॥
ज्वलन्मणिशिखाञ्चैन वामुकिप्रमुखा निनि ।
स्थिरप्रदीपनामेत्य भुजगा पर्युपासते ॥ ३८ ॥
तत्कृतानुग्रहापेक्षी त मुहुर्दूनहारितै ।
अनुकूलयतीन्द्रोऽपि कल्पद्रुमविभूपणै ॥ ३९ ॥
इत्यमाराध्यमानोऽपि क्लिश्नाति भुवनत्रयम् ।
शाम्येत् प्रत्यपकारेण नोपकारेण दुर्जन ॥ ४० ॥
तेनामरवधूहस्तमदयालूनपल्लवा ।
अभिज्ञाश्छेदपानाना क्रियन्ते नन्दनद्रुमा ॥ ४१ ॥
वीज्यते स हि समुप्त स्वाममाधारणानिले ।
चामरै सुरवन्दीना वाष्पशीकरवर्षिभि ॥ ४२ ॥
उत्पाद्य मेरुश्रृङ्गाणि क्षुण्णानि हरिता खुरै ।
आनीडपर्वतास्तेन कल्पिता स्वेपु वेश्मसु ॥ ४३ ॥

36 *b* So Vā-1, P-3 correct *c* F —नामान्यमृ— After this śloka P-4 has 39

37 *d* H 2, Va-3 समीक्षते but in comment Vā 3 has प्रतीक्षते

38 *b* I-5, I 6, I 7 वामुकिप्रहिता, noted by I 8 as a variant

39 *b* Va-3 प्रत्यह दून—, I 7 त पुनर्दूत— *d* I-5, I-6 स्वर्गद्रुम— noted by I 8 and followed by Gop

40 *c* F काम्येत् with शाम्येत् in footnotes, H 1 प्रत्युप—with comment प्रत्युपकारेण विरुपकरणेन, so H 2, H-5

41 *a* Vā-3 I-5, I 6, I 7, I 8, G, Bh, T —हस्तै

42 *a* So Vā-2, Va 3, P 2, P-5, I 1, I-4, H 2, H-5, G, S T, I 2, I 6, I 7, P 3, P-4, I 8 सनुप्त *c* P-5 सुरवन्दीभि noted by I 8 *d* F नाप्प Vā 1, S —शीकर— H 1, H 2 H 5, B 1, B 2 read this śloka before 41

43 *a* I 8—ति *b* Va 1 क्षुरै

मन्दाकिन्या पय शेप दिग्वारणमदाविलम् ।
हेमाम्भोरुहशस्याना तद्वाप्यो धाम साम्प्रतम् ।। ४४ ।।
भुवनालोकनप्रीति स्वर्गिभिर्नानुभूयते ।
खिलीभूते विमानाना तदापातभयात् पथि ।। ४५ ।।
यज्वभि सभृत हव्य विततेष्वध्वरेषु स ।
जातवेदोमुखान् मायी मिपतामाच्छिनत्ति न ।। ४६ ।।
उच्चैरुच्चै श्रवास्तेन हयरत्नमहारि च ।
देहबद्धमिवेन्द्रस्य चिरकालार्जित यश ।। ४७ ।।
तस्मिन्नुपाया न सर्वे क्रूरे प्रतिहतक्रिया ।
वीर्यवन्त्यौपधानीव विकारे सानिपातिके ।। ४८ ।।
जयाशा यत्र चास्माक प्रतिघातोत्थितार्चिपा ।
हरिचक्रेण तेनास्य कण्ठे निष्कमिवार्पितम् ।। ४९ ।।
तदीयास्तोयदेष्वद्य पुष्करावर्तकादिपु ।
अभ्यस्यन्ति तटाघात निर्जितैरावता गजा ।। ५० ।।
तदिच्छामो विभो स्रष्टु सेनान्य तस्य शान्तये ।
कर्मबन्धच्छिद धर्मं भवस्येव मुमुक्षव ।। ५१ ।।

44 *c* So Bh , I 8 followed by the four commentators, others मस्यानाम्

45 *b* H 2 नानुमीयते *d* I 5, I 6, I 7, I 8—तदापायभयात् followed by Br Bhar , Gop , Mal अपायात् समापत्ते = आपातात् समापत्ते , F तदाघातभयात्—

46 *b* Vā 2 विहितेष्व— *c* I 7—मुख मायी B 1, B 2 reverse 46-47

48 *a* So I 8 others सर्वे न *d* F —पातके

49 *b* F प्रतिघातोद्धताचिपा *d* So Vā 1, P 5, Bh , I 8 F , S , G , T , H 2 निष्कमिवार्पिता, H 5 गले निष्क इवार्पित , I 7, Vā 2 Vā 3, P 2 P 3 P-4, I 2 I 5, H 1 कण्ठे निष्क इवार्पित , followed by Br Bhar Gop in I 8

50 *a* I 8—देष्वेव *d* F , P 5—रावणा

गोप्तारं सुरसैन्यानां यं पुरस्कृत्य गोत्रभित् ।
प्रत्यानेष्यति शत्रुभ्यो बन्दीमिव जयश्रियम् ॥ ५२ ॥
वचस्यवसिते तस्मिन् ससर्ज गिरमात्मभूः ।
गर्जितानन्तरां वृष्टिं सौभाग्येन जिगाय या ॥ ५३ ॥
सम्पत्स्यते वः कामोऽयं कालः कश्चित् प्रतीक्ष्यताम् ।
न त्वस्य सिद्धये यास्यामि सर्गव्यापारमात्मना ॥ ५४ ॥
इतः स दैत्यः प्राप्तश्रीर्नेत एवार्हति क्षयम् ।
विषवृक्षोऽपि संवर्ध्य स्वयं छेत्तुमसाम्प्रतम् ॥ ५५ ॥
वृतस्तेनेदमेवाहं मया चास्मै प्रतिश्रुतम् ।
वरेण शमितं लोकानलं दग्धुं हि तत्तपः ॥ ५६ ॥
संयुगे सांयुगीनं तमुद्यन्तं प्रसहेत कः ।
अंशादृते निषिक्तस्य नीललोहितरेतसः ॥ ५७ ॥
स हि देवः परं ज्योतिस्तमःपारे प्रतिष्ठितम् ।
परिच्छिन्नप्रभावर्द्धिर्न मया न च विष्णुना ॥ ५८ ॥
उमारूपेण ते यूयं संयमस्तिमितं मनः ।
शम्भोर्यतध्वमाक्रष्टुमयस्कान्तेन लोहवत् ॥ ५९ ॥

52 *a* P-5 सेनानां *d* I 8 with comm. बन्दी—
53 *a* So Vā 1, I 5, I 6, I 7, H 2, Vā 3—स्युपरते तस्य, Bh. I-8 with Mal.—स्यवसिते तस्मिन् *d* So Vā 1, P 2, P-3, P-4, P 5 I 2, I-4, B-1, B-2, Bh., I-8 जिगाय सा
54 *b* Vā 2, P-4, I-5, I 7, Bh., H 1, T कालः कश्चित्, I 1 corrects कालः कश्चित् into कश्चित् कालः I 8 प्रतीक्ष्यता with comment *c* Bh., F, T सिद्धौ, P 2 corrects सिद्धौ into सिद्धये, cp 63 *d* F, Bh.—मात्मनः, I-4 reverses 54-55
56 *a* So I 5, I 7, I-8, Vā-1 वृतस्तेनेदमेवाहं, others वृतं तेनेदमेव प्राक् followed by Mal. *b* I 7 तस्मै प्र—, I 2 प्रतिष्ठितम् *c* I-8 शमितं with नमितुं as a variant
57. *c* P-4, P-5, I 2, I-5, H 2, H-5 निषक्तस्य
58 *b* Bh., G, T, S व्यवस्थितम्
59 *b* P-5 समाधिस्ति—, an intrusion from Mal.'s comment?

उभे एव क्षमे वोढुमुभयोर्वीर्यमाहितम् ।
सा वा शम्भोस्तदीया वा मूर्तिर्जलमयी मम ॥ ६० ॥
तस्यात्मा शितिकण्ठस्य सैनापत्यमुपेत्य व ।
मोक्ष्यते सुरबन्दीना वेणीर्वीर्यविभूतिभि ॥ ६१ ॥
इति व्याहृत्य विबुधान् विश्वयोनिस्तिरोदधे ।
मनस्याहितकर्तव्यास् तेऽपि प्रति दिव ययु ॥ ६२ ॥
तत्र निश्चित्य कदर्पमगमत् पाकशासन ।
मनसा कार्यससिद्धित्वराद्विगुणरहसा ॥ ६३ ॥
अथ स ललितयोपिद्भ्रूलताचारुशृङ्ग
रतिवलयपदाङ्के चापमासज्य कण्ठे ।
सहचरमधुहस्तन्यस्तचूताङ्कुरास्त्र
शतमखमुपतस्थे प्राञ्जलि पुष्पधन्वा ॥ ६४ ॥

इति श्रीकुमारसभवे महाकाव्ये कविकालिदासकृतौ देवागमन
नाम द्वितीय सर्ग ॥

60 *a* F उभे विपक्ष—, P 2 सोढु *b* Vā 1, G, S, T बीजमा—for which cp X, 26, वीर्य—in I 8 followed by Mal for which cp III, 16

61 *a* P 4, P 5 शितकण्ठस्य, Vā 1 सिति *b* F, Bh सैना—so G, Bh *c* P 5 मोक्ष्यति स्वर्ग—

62 *d* Vā 3, P 5 तेऽपि प्रति ययुर्दिवम्, cp III, 31c, some तेऽपि देवा दिव—

63 *c* So P 5, I 5, I 6, I 7, I 8 T, Bh, F, S कार्यससिद्धौ, कार्यसमिद्धि Noted as variant by I 8

64 *a* So F, G, S, T, P 5 and so Mallināthа on this in I 8 also, majority सुल— *b* T —पधाङ्के *c* F —चरमदहस्त— *d* F —शतमघमु—, P 5, I 5, I 7 पुष्पकेतु

Colophon Vā 3 इति श्रीकालिदासकृतौ कुमारसभवे महाकाव्ये कामागमनो नाम द्वितीय सर्ग, P 3 names the sarga as ब्रह्माभिगमन, P 4 मदनागमन, I 1 कदर्पागमन, I 4 सुरब्रह्माभिगमन, H 5 ब्रह्माभिगमन, T ब्रह्माभिगमन, so Bh, G ब्रह्मसवादवर्णनम्, S ब्रह्मसाक्षात्कार, while F has इति श्रीकालिदासकृतौ कुमारसभवे महाकाव्ये द्वितीय सर्ग ॥ श्रीरामचन्द्रार्पणमस्तु। श्रीरामचन्द्राय मङ्गलम्। श्रीवकुलेशाय मङ्गलम्

## ॥ तृतीयः सर्गः ॥

तस्मिन् मघोनस्त्रिदशान् विहाय
सहस्रमक्ष्णां युगपत् पपात ।
प्रयोजनापेक्षितया प्रभूणां
प्रायश्चलं गौरवमाश्रितेषु ॥ १ ॥
स वासवेनासनसन्निकृष्टम्
इतो निषीदेति विसृष्टभूमिः ।
भर्तुः प्रसादं प्रतिनन्द्य मूर्ध्ना
वक्तुं मिथः प्राक्रमतैनमेवम् ॥ २ ॥
आज्ञापय ज्ञातविशेष पुंसां
लोकेषु यत्ते करणीयमस्ति ।
अनुग्रहं संस्मरणप्रवृत्तम्
इच्छामि संवर्धितुमाज्ञया ते ॥ ३ ॥
केनाभ्यसूया पदकाङ्क्षिणा ते
नितान्तदीर्घैर्जनिता तपोभिः ।
यावद् भवत्याहितसायकस्य
मत्कार्मुकस्यास्य निदेशवर्ती ॥ ४ ॥
असंमतः कस्तव मुक्तिमार्गं
पुनर्भवक्लेशभयात् प्रपन्नः ।

1 *c* Vā 2, H 2 (with comment)—पक्षनया

2 *b* Va 2, Vā 3, P 2, P-4, H 1 निसृष्ट— *c* So F, G, P 5, S, T, Va 1, I 5, I 7 प्रतिबन्ध्य, I 8 प्रतिषिध्य *d* So Va-3 I 8, I 5—नैवमेष, I 7—नैवमेव, majority—तैवमेनम्

3 *c* So F, P 5, G, S, T, Vā 2, Vā 3, P 3, P 4, I-4, प्रवृद्धम् Va *1*, *I 1*, *I 2*, *I 3*, *I-5*, *I 6*, *I 7*, *I 8* *d* मनर्धितमा—*G*, *S*, T, Bh.

4 *a* So F, S, T, Bh., Vā 1, I 8 फल—, G मदक्ता— *c* I 5, I 6 तावद् म—

वद्धश्चिरं तिष्ठतु सुन्दरीणाम्
आरेचितभ्रूचतुरैर्विलासैः ॥ ५ ॥
अध्यापितस्योशनसापि नीतिं
प्रयुक्तरागप्रणिधिर्द्विषस्ते ।
कस्यार्थधर्मौ वद पीडयामि
सिन्धोस्तटावोघ इव प्रवृद्धः ॥ ६ ॥
कामेकपत्नीव्रतदुःखशीलां
लोलं मनश्चारुतया प्रविष्टाम् ।
नितम्बिनीमिच्छसि मुक्तलज्जां
कण्ठे स्वयंग्राहनिषक्तबाहुम् ॥ ७ ॥
कयासि कामिन् सुरतापराद्धः
पादानतः कोपनयावधूतः ।
तस्याः करिष्यामि दृढानुतापं
प्रवालशय्याशरणं शरीरम् ॥ ८ ॥
प्रसीद विश्राम्यतु वीर वज्रं
शरैर्मदीयैः कतमः सुरारिः ।
बिभेतु मोघीकृतबाहुवीर्यः
स्त्रीभ्योऽपि कोपस्फुरिताधराभ्यः ॥ ९ ॥

5 a H 2 आरोपितभ्रू—, F, G, S, T, Bh आरेचितभ्रूचतुरैः कटाक्षैः, B 1 आरेचितभ्रूचटुलैः कटाक्षैः, P 4 P 5 आरेचितभ्रूललितैः कटाक्षैः

6 b Vā 1—प्रणिधे c H 2—र्थकामौ, F—र्थधर्मौ पद पीड—(वद ?)

7 a I 5, I 6 I 8—मेकपत्नीं followed by Br Bhar, Gop b F प्रविष्टा c P 5 विलासिनीमि—, I 5 corrects विलासिनीं into नित—

8 a H 2 सरसापराध, F G, S, T, Bh सुरतापराधात्, Vā 1 सुरतापराद्धे, P 3 सहसापराद्ध, I 2 सहसापराध, P 2 सहसापराध but on margin सुरतापराधात् followed by Mal cp कस्मिन्नपि पूजार्हेऽपराद्धा *Aś* IV 1 Rv VIII 48

तव प्रसादात् कुसुमायुधोऽपि
सहायमेकं मधुमेव लब्ध्वा ।
कुर्यां हरस्यापि पिनाकपाणेर्
धैर्यच्युतिं के मम धन्विनोऽन्ये ॥ १० ॥
अथोरुदेशादवतार्य पादम्
आक्रान्तिसंभावितपादपीठम् ।
सङ्कल्पितेऽर्थे विवृतात्मशक्तिम्
आखण्डलः काममिदं बभाषे ॥ ११ ॥
सर्वं सखे त्वय्युपपन्नमेतद्
उभे ममास्त्रे कुलिशं भवांश्च ।
वज्रं तपोवीर्यमहत्सु कुण्ठं
त्वं सर्वतोगामि च साधकं च ॥ १२ ॥
अवैमि ते सारमतः खलु त्वां
कार्ये गुरुण्यात्मसमं नियोक्ष्ये ।
व्यादिश्यते भूधरतामवेक्ष्य
कृष्णेन देहोद्वहनाय शेषः ॥ १३ ॥
आशंसता बाणगतिं वृषाङ्के
कार्यं त्वया नः प्रतिपन्नकल्पम् ।
निबोध यज्ञांशभुजामिदानीम्
उच्चैर्द्विषामीप्सितमेतदेव ॥ १४ ॥

10 *a* भवत्प्रसादात् P-5 *c* पिनाकपाणि F

11 *a* F. ऊरा—, I-5 अवतीर्य *b* I 1, I-3 आक्रान्त— I-5 —पाद-पीठ, but in comment —पीठ, H 2 —पीठ *c* F, Bh., I-8 सङ्कल्पितार्थे with four commentators —तेऽर्थे P-4 विवृतात्म—

12 *a* I-5, I-6 पूर्वं सखे *c* F कुण्ण (=भुग्न?) *d* H 2 साधक च *with comment* साधक चास्म

13 *d* Va-2 देहोद्धरणाय, cp Rv XIII. 8

14. *a* So F, I-8 with four commentators, Va 1 —शशाङ्क *c* I-8 विनाश recording अवेहि as variant, cp विचिन्वन् for निचिन्वन्, I-8 यज्ञाङ्गभुजा— *d* F —तमनदत्र, G, S, T, Bh तमतदेव

अमी हि वीर्यप्रभव भवस्य
जयाय सेनान्यमुशन्ति देवा ।
स च त्वदेकेपुनिपातसाध्यो
ब्रह्माङ्गभूर्ब्रह्मनियोजितात्मा ॥ १५ ॥

तस्मै हिमाद्रे प्रयता तनूजा
जितात्मने रोचयितु यतस्व ।
योपित्सु तद्वीर्यनिपेकभूमि
सैव क्षमेत्यात्मभुवोपदिष्टम् ॥ १६ ॥

गुरोर्नियोगाच्च नगेन्द्रकन्या
स्थाणु तपस्यन्तमधित्यकायाम् ।
अन्वास्त इत्यप्सरसा मुखेभ्य
श्रुत मया मत्प्रणिधि स वर्ग ॥ १७ ॥

तद् गच्छ सिद्धयै कुरु देवकार्यम्
अर्थोऽयमर्थान्तिरभव्य एव ।
अपेक्षते प्रत्ययमुत्तम त्वा
बीजाङ्कुर प्रागुदयादिवाम्भ ॥ १८ ॥

अस्मिन् सुराणा विजयाभ्युपाये
तवैव कामास्त्रगति कृती त्वम् ।
अपि प्रसिद्ध यशसे हि पुसाम्
अनन्यसाधारणमेव कर्म ॥ १९ ॥

15 *a* F, T, S, P-4, H 2, H 5, Bh ब्रह्मणि यो—

16 *a* P 5 प्रथिना त— *b* F, P 2 P 5, I 1, I 6, I 5, T, S, G Bh यतात्मने, I 5 I 6 योजयितु यतस्व *c* F निपिक्तभूमि, cp II, 60

17 *c* I 5, I 6, I 8 (with four commentators) अध्यास्त, Vā 3 उपास्त

18 *b* Vā 2 I 8, Vā 3 P 4, I 1, I 3, I 5, I 6, H 1, H 2, H-5, B 1—रम्य, F, G, S, T, Bh—भाव्य *c* H 2 अवेक्षते, P 5 अपेक्षा प्रत्ययमङ्ग कर्व्यं

19 *a* F Bh—नस्मिन् *b* F, G, S, T, I 8, Bh नामास्त्र— *c* So P 5 others अप्यप्र—with commentators

सुराः समभ्यर्थयितार एते
कार्यं त्रयाणामपि विष्टपानाम् ।
चापेन ते कर्म न चातिहिंस्रम्
अहो बतासि स्पृहणीयवीर्यः ॥ २० ॥
मधुश्च ते मन्मथ साहचर्याद्
असावनुक्तोऽपि सहाय एव ।
समीरणः प्रेरयिता भवेति
व्यादिश्यते केन हुताशनस्य ॥ २१ ॥
तथेति शेषामिव भर्तुराज्ञाम्
आदाय मूर्ध्ना मदनः प्रतस्थे ।
दिग्वारणास्फालनकर्कशेन
हस्तेन पस्पर्श तदङ्गमिन्द्रः ॥ २२ ॥
स माधवेनाभिमतेन सख्या
रत्या च साशङ्कमनुप्रयातः ।
स्वाङ्गव्ययप्रार्थितकर्मसिद्धिः
स्थाण्वाश्रमं हैमवतं जगाम ॥ २३ ॥

20 *d* I-5 सखे वयासि (=सखे? सखे गुरुत्वये?), I-8 अहो वयासि After this F notes

ततः स्फुरत्केसरलग्नभृङ्गं सौरभ्यमत्तालिदिगन्तरालम् ।
ददौ हरिः सादरमीक्षमाणो मन्दारमालां मकरध्वजस्य ॥

Not found in our manuscripts

21 *c* F, G, Bh.—णश्चादयिता, P-5, T, S—रणो नोदयिता, Vā 2, Vā 3, P 2, P-3, P-4, I 1, I 2, I-3 I-4, I-6, I 8 (with four commentators), H-1—रण प्रेरयिता

22 *a* I-8 माल्यमिव followed by Br, Bhar and Gop obviously from comment—शेषां=माल्याम् *c* F ऐरावतास्फाल—, Vā-3 दिग्वारणा, but comm ऐरावता—o I-8, obviously ऐरावता an intrusion from comment cp Rv III. 55

23 *b* Vā 2—ङ्गमभिप्र— *c* So I 1, P 2, I-5, I-6, I-8, others अङ्गव्यय, but cp Rv II 55 मेय स्वदेहार्पणनिष्क्रयेण; Vā-1 I-8 कर्मसिद्धि

तस्मिन् वने संयमिनां मुनीनां
तपः समाधेः प्रतिकूलवर्ती ।
संकल्पयोनेरभिमानभूतम्
आत्मानमाधाय मधुर्जजृम्भे ॥ २४ ॥
कुबेरगुप्तां दिशमुष्णरश्मौ
गन्तुं प्रवृत्ते समयं विलङ्घ्य ।
दिग् दक्षिणा गन्धवहं मुखेन
व्यलीकनिःश्वासमिवोत्ससर्ज ॥ २५ ॥
असूत सद्यः कुसुमान्यशोकः
स्कन्धात् प्रभृत्येव सपल्लवानि ।
पादेन नापैक्षत सुन्दरीणां
संपर्कमाशिञ्जितनूपुरेण ॥ २६ ॥
सद्यः प्रवालोद्गमचारुपत्रे
नीते समाप्तिं नवचूतबाणे ।
निवेशयामास मधुर्द्विरेफान्
नामाक्षराणीव मनोभवस्य ॥ २७ ॥
वर्णप्रकर्षे सति कर्णिकारं
दुनोति निर्गन्धतया स्म चेतः ।
प्रायेण सामग्र्यविधौ गुणानां
पराङ्मुखी विश्वसृजः प्रवृत्तिः ॥ २८ ॥

24 *d* F, P 5 आदाय, H 2 जिजृम्भे
25 Omitted by I 2 *d* So I 8, others निश्वास—.
26 *c* F नापेक्षत *d* S, Va 1—सिञ्जित—, Vā 1, I 2 read this śloka before कुबेरगुप्ता (25)
27 *a* So I 8 followed by comments, others सद्य *c* F मधुद्विरेभान्
28 *b* P 5 निर्गन्धमिति स्म—, I 8 records निर्गन्धितया as a variant *c* Vā 3 मामस्त्यविधौ, for सामग्र्य cp Rv XVII, 30 *d* I 6, P-5 अवाङ्मुखी

बालेन्दुवक्राण्यविकासभावाद्
बभुः पलाशान्यतिलोहितानि ।
सद्यो वसन्तेन समागतानां
नखक्षतानीव वनस्थलीनाम् ॥ २९ ॥
लग्नद्विरेफाञ्जनभक्तिचित्रं
मुखे मधुश्रीस्तिलकं निवेश्य ।
रागेण बालारुणकोमलेन
चूतप्रवालोष्ठमलंचकार ॥ ३० ॥
मृगाः प्रियालद्रुममञ्जरीणां
रजःकणैर्विघ्नितदृष्टिपाताः ।
मदोद्धताः प्रत्यनिलं विचेरुर्
वनस्थलीर्मर्मरपत्रमोक्षाः ॥ ३१ ॥
चूताङ्कुरास्वादकषायकण्ठः
पुंस्कोकिलो यन् मधुरं चुकूज ।
मनस्विनीमानविघातदक्षं
तदेव जातं वचनं स्मरस्य ॥ ३२ ॥
हिमव्यपायाद् विशदाधराणाम्
आपाण्डुरीभूतमुखच्छवीनाम् ।
स्वेदोद्गमः किंपुरुषाङ्गनानां
चक्रे पदं पत्रविशेषकेषु ॥ ३३ ॥

29 *a* So F, Bh., I-8, others—वक्त्राण्—, V, P-5—ण्यविकाशभावात्, I-6—ण्यविकाशितभावात्, F—ण्यविकास— *d* P-5—गतान्येव, F—तानीव वन—

30 *a* I-1 corrects चित्रे into चित्र, I-5, I-6, Vā-1—चित्रे, F लग्नद्विरेफा—, cp VII, 16 *b* So P-5 others प्रकाश्य

31 *a* F प्रवालद्रु, I-8 (with comments), T., Bh. पियाल—

32 *b* F—विघातरक्ष, for a similar confusion of र and द cp VII, 73

33 *a* Vā 3—व्यपायान्मधुरा—but in comment विशदा नीरसा अधरा यासां *b* I-8, Bh.—पाण्डरीभूत— *c* P-5 स्वेदो नव

तपस्विन स्थाणुवनौकसस्ताम्
आकालिकी वीक्ष्य मधुप्रवृत्तिम् ।
प्रयत्नसस्तम्भितविक्रियाणा
कथचिदीशा मनसा बभूवु ॥ ३४ ॥
स देशमारोपितपुष्पचापे
रतिद्वितीये मदने प्रपन्ने ।
काष्ठागतस्नेहरसानुविद्ध
द्वन्द्वानि भाव क्रियया विवव्रु ॥ ३५ ॥
मधु द्विरेफ कुसुमैकपात्रे
पपौ प्रिया स्वामनुवर्तमान ।
शृङ्गेण सस्पर्शनिमीलिताक्षी
मृगीमकण्डूयत कृष्णसार ॥ ३६ ॥
ददौ रसात् पङ्कजरेणुगन्धि
गजाय गण्डूषजल करेणु ।
अर्धोपभुक्तेन बिसेन जाया
सभावयामास रथाङ्गनामा ॥ ३७ ॥
गीतान्तरेषु श्रमवारिलेशै
किंचित्समुच्छ्वासितपत्रलेखम् ।
पुष्पासवाघूर्णितनेत्रशोभि
प्रियामुख किंपुरुषश्चुचुम्ब ॥ ३८ ॥

34 *b* H 2, H-5 अकालिनी

36 *a* F द्विरेभ *c* F—ताक्षि, P-5 I 5, I 6, S, G, T, Bh—ण च स्पर्शनि—, cp V, 79 = VII, 80 अन्यान्यसस्पर्शनिमीलिताक्षी *d* Bh—कृष्णसार

37 *a* V ā-1, P-5 ददौ सरपङ्कज— *b* H 2 करेण *c* V ā-2 P 3, P-4, I 8 विनेन, Bh विमेन

38 *a* H-5—गु श्रमवारि—with comm श्रमस्य धर्मस्य वारि *d* F, I 1, I-5, I 6, Bh, I 8, B 1, B 2 चुचुम्बे, I 8 notes—रपैश्चुचुम्बे

पर्याप्तपुष्पस्तबकस्तनीभ्यः
स्फुरत्प्रवालोष्ठमनोहराभ्यः ।
लतावधूभ्यस्तरवोऽप्यवापुर्
विनम्रशाखाभुजबन्धनानि ॥ ३९ ॥

श्रुताप्सरोगीतिरपि क्षणेऽस्मिन्
हरः प्रसंख्यानपरो बभूव ।
आत्मेश्वराणां न हि जातु विघ्नाः
समाधिभेदप्रभवो भवन्ति ॥ ४० ॥

लतागृहद्वारगतोऽथ नन्दी
वामप्रकोष्ठार्पितहेमवेत्रः ।
मुखार्पितैकाङ्गुलिसंज्ञयैव
मा चापलायेति गणान् व्यनैषीत् ॥ ४१ ॥

निष्कम्पवृक्षं निभृतद्विरेफं
मूकाण्डजं शान्तमृगप्रचारम् ।
तच्छासनात् काननमेव सर्वं
चित्रार्पितारम्भमिवावतस्थे ॥ ४२ ॥

39 *a* F, H 1, Bh —स्तनाभ्य-

40 *d* F —भेदप्रभवा न—.

41 *a* Vā 1, I-8, Vā 2, Va-3, P-3, I 1, I 2, I-4, I-5, I-6, H 1— गृहद्वारि गतो—, cp I, 14 (दरीगृहद्वारविलम्बि—) *b* Vā 1 corrects हैम into हेम— I 1, I-3, I-8 हेमदण्ड, I-5 हैम— *c* I-6 नासार्पितैका—may be आस्यार्पितैकाङ्गुलि—which was changed into नासार्पि— *d* F व्यनैषित् with व्यनैषत, व्यनैषन् as variants, Va-2, Vā-3 व्यपेषीत् (=व्यपैषीत्?)

42 *a* Vā 2, Va-3, I 1, I-3, I-6, B-1 निष्कम्प—, F निभृतद्विरेफ *d* F —र्पितारम्भमिवावतस्थे, commentators have differed in the interpretation of आरम्भ, Brhaspati Bharata and Gopala (in I-8)—आरम्भ इवा—perhaps under the impression of Rv II, 31 सक्ताङ्गुलिः सायकपुङ्ख एव चित्रार्पितारम्भ इवावतस्थे ।

दृष्टिप्रपात परिहृत्य तस्य
काम पुर शुक्रमिव प्रयाणे ।
प्रान्तेपु ससक्तनमेरुशाख
ध्यानास्पद भूतपतेर्विवेश ॥ ४३ ॥
स देवदारुद्रुमवेदिकाया
शार्दूलचर्मव्यवधानवत्याम् ।
आसीनमासन्नशरीरपातस्
त्रियम्बक सयमिन ददर्श ॥ ४४ ॥
पर्यङ्कबन्धस्थिरपूर्वकायम्
ऋज्वायत सनमितोभयासम् ।
उत्तानपाणिद्वयसनिवेशात्
प्रफुल्लराजीवमिवाङ्कमध्ये ॥ ४५ ॥
भुजगमोद्बद्धजटाकलाप
कर्णावसक्तद्विगुणाक्षसूत्रम् ।
कण्ठप्रभाभिन्नविशेषनीला
मृगत्वच ग्रन्थिमती दधानम् ॥ ४६ ॥

43 *a* F दृष्टिप्रतीप, P 2, I 5 दृष्टे प्रदीप, I 8 दृष्टिप्रपाल, Vā 1, G S, T Bh दृष्टिप्रपात for which cp XVII, 7*a*, P 5 दृष्टिप्रदीप

44 *d* So F, G, T, Bh, S, P 5 त्रैयम्बक (with comment त्रैयम्बक त्रिनेत्रम्), I 5, I 6—पातस्त्र त्र्यम्बक स—, this was perhaps to avoid the difficulty (of त्रियम्बक) which later on led to its substitution by त्रिलोचन in the majority of MSS

45 *b* Vā 1 ऋज्वायतनासन—, I 5, I 8—भयांशम्, cp 70 *c* H 5 उत्तानपाणिद्वयम निवेशात् with comment निवेशात् स्थानात् उत्तानपाणिद्वयसम् उत्तानमुद्गत पाणिद्वयस करयुग्म यस्य तम्

46 *a* Commentators on I 8—गाव—, P 5, F, G, S, T, Bh —गमान्नद्धजटा—, B 1—गमो वद्ध—an illustration of the confusion of the two variants—मो—of भुजगमोन्नद्ध and वद्ध of—गमानद्ध— *c* So P 5, others—प्रभासङ्ग— *d* P 5—मनी वमानम्, cp I, 56*b*

किंचित्प्रकाशस्तिमितोग्रतारैर्
भ्रूविक्रियायां विरतप्रसङ्गैः ।
नेत्रैरविस्पन्दितपक्ष्ममालैर्
लक्ष्यीकृतघ्राणमधोमयूखैः ॥ ४७ ॥
अवृष्टिसंरम्भमिवाम्बुवाहम्
अपामिवाधारमनुत्तरङ्गम् ।
अन्तश्चराणां मरुतां निरोधान्
निवातनिष्कम्पमिव प्रदीपम् ॥ ४८ ॥
कपालनेत्रान्तरलब्धमार्गैर्
ज्योतिःप्ररोहैरुदितैः शिरस्तः ।
मृणालसूत्राधिकसौकुमार्यां
बालस्य लक्ष्मीं ग्लपयन्तमिन्दोः ॥ ४९ ॥
मनो नवद्वारनिषिद्धवृत्ति
हृदि व्यवस्थाप्य समाधिवश्यम् ।
यमक्षरं वेदविदो विदुस्तम्
आत्मानमात्मन्यवलोकयन्तम् ॥ ५० ॥

47 *a* Va-1—स्तिमितान्यतारैः *b*—यायां स्तिमितप्रसङ्गैः H 1, but in comment विरत—, F विरलप्रसङ्गैः with विरल—in notes H 2 विरतिप्रसङ्गैः. *c* H-5—स्वस्पन्दितपक्ष्म—with comment अवस्पन्दितानि निश्चलानि Va 1 अवस्पन्दित (=अवस्पन्दित?) *d* F P-4, I-3, I-8 लक्ष्यीकृत—, Va 2 puts 34 (तपस्विन etc) after 47

48 *a* H-5 अदृष्टसंरम्भ—with comment अविद्यमानसंरम्भ— *d* I 1, I-5 I-6 H 1, H-5 निर्वात—, I-3 निवातनिष्कम्प— cp Rv III, 17 निवातस्थ—

49 *a* and *b* Bh —लब्धमार्गज्योतिः—, I-8 लग्न—as variant *c* मृणाल—H 2

50 *a* मनो भवद्वार—H 1, a significant variant I-5 I 6—द्वारि *c* I-5 I-6 ब्रह्मविदो, F G S, T Bh क्षत्रविदो

स्मरस्तथाभूतमयुग्मनेत्र
पश्यन्नदूरान् मनसाप्यधृष्यम् ।
नालक्षयत् साध्वससन्नहस्त
स्रस्त शर चापमपि स्वहस्तात् ॥ ५१ ॥

निर्वाणभूयिष्ठमथास्य वीर्यं
सघुक्षयन्तीव वपुर्गुणेन ।
अनुप्रयाता वनदेवताभ्याम्
अदृश्यत स्थावरराजकन्या ॥ ५२ ॥

अशोकनिर्भर्त्सितपद्मरागम्
आकृष्टहेमद्युतिकर्णिकारम् ।
मुक्ताकलापीकृतसिन्धुवार
वसन्तपुष्पाभरण वहन्ती ॥ ५३ ॥

आवर्जिता किचिदिव स्तनाभ्या
वासो वसाना तरुणार्करागम् ।
सुजातपुष्पस्तबकावनम्रा
सचारिणी पल्लविनी लतेव ॥ ५४ ॥

स्रस्ता नितम्बादवलम्बमाना
पुन पुन केसरपुष्पकाञ्चीम् ।
न्यासीकृता स्थानविदा स्मरेण
मौर्वीं द्वितीयामिव कार्मुकस्य ॥ ५५ ॥

*b*—सोऽप्य—Vā 3, —साप्यदृश्यम् P 5, I 2 *c*—सखिन्न— (=सस्विन्न ?)

53 *c* सिन्दुवार P 2, P 3, I 1, I 3, I 4, I 8, H 1, H 2, H 5

54 *c* Bh, F पर्याप्तपुष्प—, cp VII, 20 सुजातोत्पल—, सजातपुष्प— P 5, I 5, I 6, I 8, for which cp सा सभवद्भि कुसुमैर्लतेव VII, 21 Confusion of सु and सम् is frequent

55 *a*—दवरोधयन्ती I 5, I 6, —रोहयन्ती a variant in I 8 *b* केसरदामका—F, Bh, I 5 *d* द्वितीयमौर्वीमिव कार्मुकस्य F, Vā-3, P 2 P 5, I 1, I 3, I 5, I 8 noting our reading as variant

सुगन्धिनि श्वासविवृद्धतृष्णं
बिम्बाधरासन्नचरं द्विरेफम् ।
प्रतिक्षणं सम्भ्रमलोलदृष्टिर्
लीलारविन्देन निवारयन्ती ॥ ५६ ॥

तां वीक्ष्य सर्वावयवानवद्यां
रतेरपि ह्रीपदमादधानाम् ।
जितेन्द्रिये शूलिनि पुष्पकेतुः
स्वकर्मसिद्धिं पुनराशशंस ॥ ५७ ॥

भविष्यतः पत्युरुमापि शम्भोः
समाससाद प्रतिहारभूमिम् ।
योगात् स चान्तः परमात्मसंज्ञं
दृष्ट्वा परं ज्योतिरुपारराम ॥ ५८ ॥

ततो भुजङ्गाधिपतेः फणाग्रैर्
अधः कथंचिद् धृतभूमिभागम् ।
शनैः कृतप्राणविमुक्तिरीशः
पर्यङ्कबन्धं निविडं बिभेद ॥ ५९ ॥

तस्मै शशंस प्रणिपत्य नन्दी
शुश्रूषया शैलसुतामुपेताम् ।

56 *a* सुगन्धनि—P-3, सुगन्धिनिश्वास Bh. *b* F द्विरेनम् *d* F निवारयन्ति

57. *c* यतेन्द्रिये P-4, यतीन्द्रिये H 1 पुष्पधन्वा P-3 after scoring—केतुः, so B-1, F, G, Bh—चाप, I-8 पुष्पकेतुः recording—चाप as a variant *d* स्वकार्यसिद्धिं F, G, cp II, 63*c*

58 *a* So I-8, समाच Vā 1, I-5 उमायंसा—, Vā 2 reads —उपासितु मापि पिनाकपाणि समा—while P-5 has —उपासितु माय पिनाकपाणि समा— *c*—परमार्थतत्त्व I-5 *d* दृष्ट्वा चिर—I-5, I-6, P-4 omits *c* and *d* (cf. 58) and *a* and *b* of 59

59. *a* फणाभिः P-5 *b* So Vā 1, I-8 followed by Br, Bhar, Gop; P-2, G, S, T—भाग; so Mal in I-8, F धृतभूमिभाग with धृत in footnotes.

प्रवेशयामास च भर्तुरेना
भ्रूक्षेपमात्रानुमतप्रवेशाम् ॥ ६० ॥
तस्या सखीभ्या प्रणिपातपूर्वं
स्वहस्तलून शिशिरात्ययस्य ।
व्यकीर्यत त्र्यम्बकपादमूले
पुष्पोच्चय पल्लवभङ्गभिन्न ॥ ६१ ॥
उमापि नीलालकमध्यशोभि
विस्रसयन्ती नवकर्णिकारम् ।
चकार कर्णच्युतपल्लवेन
मूर्ध्ना प्रणाम वृषभध्वजाय ॥ ६२ ॥
अनन्यभाज पतिमाप्नुहीति
सा तथ्यमेवाभिहिता भवेन ।
न हीश्वरव्याहृतय कदाचित्
पुष्णन्ति पाके विपरीतमर्थम् ॥ ६३ ॥
कामस्तु बाणावसर प्रतीक्ष्य
पतङ्गवद् वह्निमुख विविक्षु ।
उमासमक्ष हरबद्धलक्ष्य
शरासनज्या मुहुराममर्श ॥ ६४ ॥

60 *c* P 4 निवेश— *d* So Vā 1, G , S , T , for which cp I, 59, but F H 1, H 5 I 8 (comment)—नुमित—with P 5 (comment), I 1, I 2 I 5, I 6

61 *a* सखिभ्या F , प्रणिपत्यमूर्ध्ना I 3, I 8 *b* P 5 स्वहस्तमूत (comment पाणिनिभ ), मूत a variant in I 8 *c* I 5—पादपद्मे

62 *a* So P 5, majority with F and Bh , however, have नीलालक *b* विश्रम—Vā 2

63 *b* F सत्यमेवा—, I 8 भव्यमे—as a variant *d* So P 5 with comment पाके=फलपाके, others पुष्णाति लोके

64 *a* P 5—वमरप्रतीक्ष , Vā 2—वमरो प्रतीक्ष्य, I 8 समीक्ष्य as a variant for प्रतीक्ष्य *d* I 8—ममर्ष

अथोपनिन्ये गिरिशाय गौरी
तपस्विने ताम्ररुचा करेण ।
विशेषिणा भानुमतो मयूखैर्
मन्दाकिनीपुष्करबीजमालाम् ॥ ६५ ॥
प्रतिग्रहीतुं प्रणयिप्रियत्वात्
त्रिलोचनस्तामुपचक्रमे च ।
संमोहनं नाम च पुष्पधन्वा
धनुष्यमोघं समधत्त बाणम् ॥ ६६ ॥
हरस्तु किंचित् परिवृत्तधैर्यश्
चन्द्रोदयारम्भ इवाम्बुराशिः ।
उमामुखे बिम्बफलाधरोष्ठे
व्यापारयामास विलोचनानि ॥ ६७ ॥
विवृण्वती शैलसुतापि भावम्
अङ्गैः स्फुटद्बालकदम्बकल्पैः ।
साचीकृता चारुतरेण तस्थौ
मुखेन पर्यस्तविलोचनेन ॥ ६८ ॥
अथेन्द्रियक्षोभमयुग्मनेत्रः
पुनर्वशित्वाद् बलवन्निगृह्य ।

65 *c* So Vā-2, H-5 with comment विशेषिणा विशेषतां प्राप्ता, F विश्लेषिणा in footnotes but विशोषिणा in text with majority, cp I, 25

66 *a* —गृहीतुं P-3, P-4, I 2, प्रणतप्रिय—F *d* —धत्त सायकम् H 1

67 *a* परिलुप्तधैर्यं Bh., F (with no variants), S, for the use of √vṛt cp XV, 41 *d* I-8, Mal. alone विलोकनानि

68 *b* स्फुरद्—H 2, I-8, F, T, S, (*comm* विकसत्कोमलनीपतुल्यैः clearly showing स्फुटत् to be original), I 8 क्वचित् on margin for स्फुरद् followed by Br, Bhar, Gop, P-5 कदम्बतुल्यैः

हेतुं स्वचेतोविकृतेर्दिदृक्षुर्
दिशामुपान्तेषु ससर्ज दृष्टिम् ॥ ६९ ॥

स दक्षिणापाङ्गनिविष्टमुष्टिं
नतांसमाकुञ्चितसव्यजानुम् ।
ददर्श चक्रीकृतचारुचापं
प्रहर्तुमभ्युद्यतमात्मयोनिम् ॥ ७० ॥

तपःपरामर्शविवृद्धमन्योर्
भ्रूभङ्गदुष्प्रेक्ष्यमुखस्य तस्य ।
स्फुरन्नुदर्चिः सहसा तृतीयाद्
अक्ष्णः कृशानुः किल निष्पपात ॥ ७१ ॥

क्रोधं प्रभो संहर संहरेति
यावद् गिरः खे मरुतां चरन्ति ।
तावत् स वह्निर्भवनेत्रजन्मा
भस्मावशेषं मदनं चकार ॥ ७२ ॥

तमाशु विघ्नं तपसस्तपस्वी
वनस्पतिं वज्र इवावभज्य ।
स्त्रीसंनिकर्षं परिहर्तुमिच्छन्
अन्तर्दधे भूतपतिः सभूतः ॥ ७३ ॥

69 *a* H 2—द्रियाक्षोभ with comment आक्षाम चाञ्चल्य, cp पर्याक्षिपत् and पर्यक्षिपत् VII, 14 *d* P 5 विसृज्य दृष्टिम्

70 *a* निपक्तमुष्टि I 5, I 6 noted in I 8 as a variant and followed by Br, Bhar, Gop *b* Va 1 नितान्त—, I 8 नतांश—followed by Br, Bhar Gop, Vā 1, H 1, G—सव्यपादम् *c* I 2 H 2, H 5, I 8 वक्री—

71 *b* दुष्प्रेक्ष्य Va 1, I 1, I 2, I 3, H 1, B 1, for दुष्प्रेक्ष्य cp XIII, 34, XVII, 10 *d* नि पपात P 3, P 4 P 5, H 2

72 *a* I 5 विमो संहर.

73 *b* वज्रमिवा—P 4 I 1, I 2, I 3, I 8 (Br Bhar, Gop), H 2, वज्र इवावरुज्य I 5,—वदह्य I 8, Br,—वरुह्य Bhar, Gop =दग्ध्वा *c* F स्त्रीसंनिधान, P 5 हर्तुकाम सोन्तर्दधे Order

तीव्राभिषङ्गप्रभवेण वृत्तिं
मोहेन संस्तम्भयतेन्द्रियाणाम् ।
अज्ञातभर्तृव्यसना मुहूर्तं
कृतोपकारेव रतिर्बभूव ॥ ७४ ॥

शैलात्मजापि पितुरुच्छिरसोऽभिलाषं
व्यर्थं समर्थ्य ललितं वपुरात्मनश्च ।
सख्योः समक्षमिति चाधिकजातलज्जा
शून्या जगाम भवनाभिमुखी कथंचित् ॥ ७५ ॥

सपदि मुकुलिताक्षीं रुद्रसंरम्भभीत्या
दुहितरमनुकम्प्यामद्रिरादाय दोर्भ्याम् ।
सुरगज इव बिभ्रत् पद्मिनीं दन्तलग्नां
प्रतिपथगतिरासीद् वेगदीर्घीकृताङ्गः ॥ ७६ ॥

इति श्रीकुमारसंभवे महाकाव्ये कविकालिदासकृतौ कामदहनं नाम तृतीयः सर्गः ॥

of 73-74 is reversed in F, Bh., Va-2, Va-3, P-3, P-4, P-5, I 3, I-8, G

74 *a*—प्रभवेन F, Va 1, P 3, P-4, P-5, I-6, H-5, B-1 *b* P-5 —स्तम्भयतीन्द्रि—

75 *b* समीक्ष्य F, Va 2, I 1, I-3, I-4, I-8 followed by Mal. alone *d* भुवना—Va 2, I 3 भवनाभिमुखा, I-8 notes—मुख *on* margin followed by Mal. and Br

76 *a* जय स मुकु—P-5, H 1 *d* प्रतिपदा—H 2 वेगदीर्घीकृताङ्ग F, Bh., H 1, G, I-8 (text alone) T, S, I-8 Br, Bhar, Gop—कृताभ्र, Mal.—कृतात्मा

Colophon varies Va-2—कामवधो नाम—, P-3—मदनदहनो नाम, P-4 कन्दर्पदहनो नाम—, P-5 इति श्रीकुमारसंभवे महाकाव्ये सटीकस्तृतीय सर्गः, I 1, Bh.—मदनदहनो—, I 2, I-4, Bh—कामदहनो—, I-8—कामदेवदहनो—, I-3—मदनदमनो—, I-5—कामस्वदहनो—, I-6—कामनिग्रहो—, F इति श्रीकालिदासस्य कृतौ कुमारसंभवे महाकाव्ये तृतीय सर्गः, S, G —मदनदहनो—.

## ॥ चतुर्थ सर्ग ॥

अथ मोहपरायणा सती
विवशा कामवधूविबोधिता ।
विधिना प्रतिपादयिष्यता
नववैधव्यमसह्यवेदनम् ॥ १ ॥
अवधानपरे चकार सा
प्रलयान्तोन्मिषिते विलोचने ।
न विवेद तयोरतृप्तयो
प्रियमत्यन्तनिमग्नदर्शनम् ॥ २ ॥
अयि जीवितनाथ जीवसीत्य्
अभिधायोत्थितया तया पुर ।
ददृशे पुरुषाकृति क्षितौ
हरकोपानलभस्म केवलम् ॥ ३ ॥
अथ सा पुनरेव विह्वला
वसुधालिङ्गनधूसरस्तनी ।
विललाप विकीर्णमूर्धजा
समदु खामिव कुर्वती स्थलीम् ॥ ४ ॥
उपमानमभूद् विलासिना
करण यत्तव कान्तिमत्तया ।
तदिद गतमीदृशी दशा
न विदीर्ये कठिना खलु स्त्रिय ॥ ५ ॥

1 Four comm प्रतिपादयिष्यता अनुभावयिष्यता but cp 10 16 प्रतिपद्य=प्राप्य, Bhar omits this śloka

2 *d* P-4—मनित्य—, G Bh विलुप्त—, I 8 Bhar विलग्न नष्ट ?

3 [illegible] त्या; [illegible] पुन *a* [illegible]—हरमस्मावल्मे—

4 *a* I 8 Mal alone विक्लवा = विह्वला, cp घनशब्दविक्लवा in 11

क्व नु मा त्वदधीनजीविता
विनिकीर्य क्षणभिन्नसौहृद ।
नलिनी क्षतसेतुबन्धनो
जलसघात इवासि विद्रुत ॥ ६ ॥
कृतवानसि विप्रिय न मे
प्रतिकूल न च ते मया कृतम् ।
किमकारणमेव दर्शन
विलपन्त्यै रतये न दीयते ॥ ७ ॥
स्मरसि स्मर मेखलागुणैर्
उत गोत्रस्खलितेषु बन्धनम् ।
च्युतकेसरदूषितेक्षणान्य्
अवतसोत्पलताडितानि वा ॥ ८ ॥
हृदये वससीति मत्प्रिय
यदवोचस्तदवैमि कैतवम् ।
उपचारपद न चेदिद
त्वमनङ्ग. कथमक्षता रति ॥ ९ ॥
परलोकनवप्रवासिन
प्रतिपत्स्ये पदवीमह तव ।
विधिना जन एष वञ्चितस्
त्वदधीन खलु देहिना सुखम् ॥ १० ॥

6 *c* I-8—बन्धना with Mal. क्षतसेतुबन्धा यस्यास्ता, Bhar क्षतसेतुबन्धना भग्नसेतुबन्धना *d* F विद्रित
8 *c* P-5 च्युति, Bh, P 2, I-8—केशर, F च्युतकेसरदूषितक्षितान्य— *d* Va 1 ताडनानि च, F, Bh ताडनानि वा
10 After this I 2 has this stray verse

क्व प्रस्थितासि करभोरु घने निशीथे
प्राणाधिपो वसति यत्र मन प्रियो मे ।
एकाकिनी वद कथ न बिभेषि बाले
नन्वस्ति पुङ्खितशरो मदन सहाय ॥

रजनीतिमिरावगुण्ठिते
पुरमार्गे घनशब्दविक्लवा ।
वसतिं प्रिय कामिनां प्रियास्
त्वदृते प्रापयितुं क ईश्वरः ॥ ११ ॥
नयनान्यरुणानि घूर्णयन्
वचनानि स्खलयन् पदे पदे ।
असति त्वयि वारुणीमदः
प्रमदानामधुना विडम्बना ॥ १२ ॥
अवगम्य कथीकृतं वपुः
प्रियबन्धोस्तव निष्फलोदयः ।
बहुलेऽपि गते निशाकरस्
तनुतां दुःखमनङ्ग मोक्ष्यति ॥ १३ ॥
हरितारुणचारुबन्धनः
कलपुंस्कोकिलशब्दसूचितः ।
वद संप्रति कस्य बाणतां
नवचूतप्रसवो गमिष्यति ॥ १४ ॥
अलिपङ्क्तिरनेकशस्त्वया
गुणकृत्ये धनुषो नियोजिता ।
विरुतैः करुणस्वनैरियं
गुरुशोकामनुरोदितीव माम् ॥ १५ ॥

11 a F —वगुण्ठिते b I 8 Cop —शब्दविह्वला , cp note on 4
13 b P-4 निःफलोदय
14 a So F , G Vā 1 , Vā 1 , on margin—पल्लव which is the reading of I 6, I 8 (Br , Bhar , Gop ), Vā 3 d P 5 प्रिय चूतप्रसवो under influence of IV 38
15 b—हृदये Vā 1, P 5, Vā-3, G , F , Bh , S , T , —हृदयैः (dative of kyth) P 2 P 3, P-4, I 2, I 8 (with four commentators= व्याकरणाय), I 5, I 6 c Vā 1, P 5 विततैः , so P 3, P-4, I 2, I 8 (with four commentators), P 5 , others—स्वरैः

प्रतिपद्य मनोहरं वपुः
पुनरप्यादिश तावदुत्थितः ।
रतिदूतिपदेषु कोकिलान्
मधुरालापनिसर्गपण्डितान् ॥ १६ ॥

शिरसा प्रणिपत्य याचितान्य्
उपगूढानि सवेपथूनि च ।
सुरतानि च तानि ते रहः
स्मर संस्मृत्य न शान्तिरस्ति मे ॥ १७ ॥

रचितं रतिपण्डित त्वया
स्वयमङ्गेषु ममेदमार्तवम् ।
ध्रियते कुसुमप्रसाधनं
तव तच्चारु वपुर्न दृश्यते ॥ १८ ॥

विबुधैरसि यस्य दारुणैर्
असमाप्ते परिकर्मणि स्मृतः ।
तमिमं कुरु दक्षिणेतरं
चरणं निर्मितरागमेहि मे ॥ १९ ॥

अहमेत्य पतङ्गवर्त्मना
पुनरङ्काश्रयिणी भवामि ते ।

16 *c* So P-4, P-5, F, G, Bh, S, T, Vā-1 corrects—दूत—into —दूति—which is also the reading of Vā-3 which adds in comment दूतीशब्दस्य छन्दोभङ्गभयात् ह्रस्वत्वम्, I-8 Br, Bhar Gop—दूत— *d* P-4—लापदिनां—, so I-8 with Br, Bhar, Gop, others—ला—ता, cp III, 32*b*, IV, 14*b* After 16th Va 1 has क्व प्रस्थितानि etc (cp note on 10) not found in majority of MSS

17 *c* P-5 स्मर for रह, F सुरतानि च ते रह पुरास्मर—, सुरतानि च तानि तानि त I-8

19 *a* I-5—धैरपि य सुदारुणै—, F—धैरपि यस्य दा—, I-8 —धैरपि यत्सुदा—with Br, Bhar, Gop *b* प्रतिकर्मणि P-5, cp VII, 6 *c* F, I 8, P-5 तदिद followed by Br., Bhar, Gop

चतुरैः सुरकामिनीजनैः
प्रिय यावन्न विलुप्यसे दिवि ॥ २० ॥
मदनेन विना क्षिता रतिः
क्षणमात्रं किल जीवतीति मे ।
वचनीयमिदं व्यवस्थितं
रमण त्वामनुयामि यद्यपि ॥ २१ ॥
क्रियतां कथमन्त्यमण्डनं
परलोकान्तरितस्य ते मया ।
सममेव गतोऽस्यतर्किता
गतिमङ्गेन च जीवितेन च ॥ २२ ॥
ऋजुतां नयतः स्मरामि ते
शरमुत्सङ्गनिषण्णधन्वनः ।
मधुना सह सस्मिता कथा
नयनोपान्तविलोकितानि च ॥ २३ ॥

20 *a* Majority—श्रयणी, Va 1 corrects—श्रयणी—into श्रयिणी, but I 8 does reverse, P 5 श्रयिनी but F श्रयणी, for श्रयिणी cp *Vikramorvaśiya*, III, 10 *d* So Va 2, P 4, I 2, I 5, I 6, I 8 with Mallinātha (न विलुप्यसे न प्रलोभिष्यसे), Bṛhaspati (विलुप्यसे = विलोभ्यसे), Bharata (विलुप्यसे पतित्वेन गृह्यसे) and Gopāla (विलुप्यसे अपह्रियसे) supporting it Other MSS and printed editions विलोभ्यसे

21 *a* So P 3 alone but good, क्षिता 'accursed, miserable, wasted', cp V, 54 अक्षिणोत्, I 8, I 6, I 8 क्व रतिः *b* Vā 1, Bh, G, T, S, G जीवितेति मे

22 *a* क्रियते क्वमद्य—I 6, I 8 ध्रियते क्वमद्य—(Gop), P 5 क्रियतां क्वमन्तम— *c* I 8 स्वयमेव गतोऽस्यतर्किता but all its commentators गतोऽस्य—, śloka omitted by P-4

23 *b*—निषक्तध—I 8 B 1, B 2,—निषङ्गध—P 5 *d* F, Bh, G, I 8 विलोकितं च यत्, Br, Bhar विलोकनं—, Vā 3—विलोचनानि च, P 5—विलोकनानि च

क्व नु ते हृदयंगमः सखा
कुसुमायोजितकार्मुको मधुः ।
न खलूग्ररुषा पिनाकिना
गमितः सोऽपि सुहृद्गतां गतिम् ॥ २४ ॥
अथ तैः परिदेविताक्षरैर्
हृदये दिग्धफलैरिवार्दितः ।
रतिमभ्युपपत्तुमातुरां
मधुरात्मानमदर्शयत् पुरः ॥ २५ ॥
तमवेक्ष्य रुरोद सा भृशं
स्तनसंबाधमुरो जघान च ।
स्वजनस्य हि दुःखमग्रतो
विवृतद्वारमिवोपजायते ॥ २६ ॥
इति चैनमुवाच दुःखिता
सुहृदः पश्य वसन्त किं स्थितम् ।
यदिदं कणशो विकीर्यते
पवनैर्भस्म कपोतकर्बुरम् ॥ २७ ॥
अयि संप्रति देहि दर्शनं
स्मर पर्युत्सुक एष माधवः ।
दयितास्वनवस्थितं नृणां
न खलु प्रेम चलं सुहृज्जने ॥ २८ ॥

25 *a* परिदेवना—F, Va 2, Va-3, P 2, I 2 *b* F दिग्धफलैरिवाहतः, I-5, I-6, I-8 दिग्धशरैरिवार्दितः, Bh दिग्धशरैरिवाहतः. *d* I-8 notes—यत् कृतौ as variant followed by Gop

27 *b* F सुहृदः पश्यसि किं मया स्थितम् *c* I-8—कणशः प्रकीर्यते, G., Bh. तदिदं कणशो वि—, F तदिदं कणशः प्रकीर्यते, cp note on I-40 *d* Va-1—कपोतपाण्डुरम् P-4 adds after स्थितम् a stanza too obscene to be quoted

28 *c* प्रमदास्वन—P 2

अमुना ननु पार्श्ववर्तिना
जगदाज्ञा ससुरासुर तव ।
विसतन्तुगुणस्य कारित
धनुष पेलवपुष्पपत्रिण ॥ २९ ॥
गत एव न ते निवर्तते
स सखा दीप इवानिलाहत ।
अहमस्य दशेव पश्य माम्
अविषह्यव्यसनप्रधूमिताम् ॥ ३० ॥
विधिना कृतमर्धवैशस
ननु मा कामवधे विमुञ्चता ।
अनघापि हि सश्रिता द्रुमे
गजभग्ने पतनाय वल्लरी ॥ ३१ ॥
तदिद क्रियतामनन्तर
भवता बन्धुजनप्रयोजनम् ।
विधुरा ज्वलनातिसर्जनान्
ननु मा प्रापय पत्युरन्तिकम् ॥ ३२ ॥
शशिना सह याति कौमुदी
सह मेघेन तडित् प्रलीयते ।
प्रमदा पतिवर्त्मगा इति
प्रतिपन्न हि विचेतनैरपि ॥ ३३ ॥

29 c Vā 1, I 8 विश—, Bh विम— d Vā 1 कोमलपुष्प—with I 2

30 d So F, P 2, P 3, P 4, I 2 B 1, B 2, Bh, —व्यसनेन धूमिताम् G, S, T, —व्यसनप्रदूपिताम् Vā 2, P 5, I 8 with Brhaspati, Bharata and Gopāla—व्यसनप्रधूपिताम् (=सतप्ताम्)

31 a So Vā-1, G, S, T, —अर्थवैशस Bh F (र्थ=र्ध) supports it, I 5, I 6—मत्यवैशस, I 8 कृतमद्य वै— b F कामपथे— c F, G, Vā 3, Bh अनपायिनि सश्रयद्रुमे, P-4 अनवद्यापि हि सश्रिता द्रुमे, P-5 अनवद्यापि हि सश्रयद्रुमे

32 d भर्तुरन्तिकम् Vā 1

33 b F तटित् प्रली—, I 8—दृविली—followed by four comments

अमुनैव कषायितस्तनी
सुभगेन प्रियगात्रभस्मना ।
नवपल्लवसंस्तरे यथा
रचयिष्यामि तनुं विभावसौ ॥ ३४ ॥
कुसुमास्तरणे सहायता
बहुशः सौम्य गतस्त्वमावयोः ।
कुरु सम्प्रति तावदाशु मे
प्रणिपाताञ्जलियाचितश्चिताम् ॥ ३५ ॥
तदनु ज्वलनं मदर्पितं
त्वरयेर्दक्षिणवातवीजनैः ।
विदितं खलु ते यथा स्मरः
क्षणमप्युत्सहते न मां विना ॥ ३६ ॥
इति चापि विधाय दीयतां
सलिलस्याञ्जलिरेक एव नौ ।
अविभज्य परत्र तं मया
सहितः पास्यति ते स बान्धवः ॥ ३७ ॥
परलोकविधौ च माधव
स्मरमुद्दिश्य विलोलपल्लवाः ।
निवपेः सहकारमञ्जरीः
प्रियचूतप्रसवो हि ते सखा ॥ ३८ ॥
इति देहविमुक्तये स्थितां
रतिमाकाशभवा सरस्वती ।

35. *b* सौम्य P-5 *d*—याचिता चिताम् I-5, I-6, I-8, followed by Br, Bhar, Gop
36 *a* समर्पित P-5
37. *d* So F, I-8 followed by four comments, Vā 1, Vā 2 and others स माधव

शफरी ह्रदशोषविह्वला
प्रथमा वृष्टिरिवान्वकम्पयत् ॥ ३९ ॥
कुसुमायुधपत्नि दुर्लभस्
तव भर्ता न चिराद् भविष्यति ।
शृणु येन स कर्मणा गतः
शलभत्वं हरलोचनार्चिषि ॥ ४० ॥
अभिलाषमुदीरितेन्द्रियः
स्वसुतायामकरोत्प्रजापतिः ।
अथ तेन निगृह्य विक्रियाम्
अभिशप्तः फलमेतदन्वभूत् ॥ ४१ ॥
परिणेष्यति पार्वती यदा
तपसा तत्प्रवणीकृतो हरः ।
उपलब्धसुखस्तदा स्मरं
वपुषा स्वेन नियोजयिष्यति ॥ ४२ ॥
इति चाह स धर्मयाचितः
स्मरशापान्तभवा सरस्वतीम् ।
अशनेरमृतस्य चोभयोर्
वशिनश्चाम्बुधराश्च योनयः ॥ ४३ ॥

39 *a* P 5 देहविसर्जनोद्यता *c* Bh, G—पविकलवा *d* P 5—वान्वकम्पत, I 8—नुकम्पयन् followed by commentators

40 c P 5 येन गत स कर्मणा *d* So F with which agree G, I 8, P 2, P 5, I 5 I 6, —चिषाम् Vā 1, P 3, P-4, I 2

42 *b* F—तो परः *d* So Vā 1, P 5, F, स्वेन स योज—P 2 —स्वेन समग्रयिष्यति, I 5, I 6, I 8 followed by commentaries

43 *a* and *b* So Vā 1, F, P-5, इति चाह स धर्मचारिणी स्मरशापान्तभवा सरस्वती I 5 I 6, I 8 (*with Br, Bhar, Gop who explain our reading as a variant*), P 2 (with वाच on margin) but with—याचित on the opposite margin), B 2, G agree with ours but have—शापावधिदा read by Bh

तदिद परिरक्ष शोभने
भवितव्यप्रियसगम वपु· ।
रविपीतजला तपात्यये
पुनरोघेन हि पूर्यते नदी ॥ ४४ ॥

इत्थ रते किमपि भूतमदृश्यरूप
मन्दीचकार मरणव्यवसायबुद्धिम् ।
तत्प्रत्ययाच्च कुसुमायुधबन्धुरेनाम्
आश्वासयन् सुचरितार्थपदैर्वचोभि ॥ ४५ ॥

अथ मदनवधूरुपप्लवान्त
व्यसनकृशा परिपालयाबभूव ।
शशिन इव दिवातनस्य रेखा
किरणपरिक्षयधूसरा प्रदोषम् ॥ ४६ ॥

॥ इति श्रीकुमारसंभवे महाकाव्ये कविकालिदासकृतौ रतिविलापो नाम चतुर्थः सर्ग. ॥

44 *d* B 1, B 2, F , Bh. न हि युज्यते—,

45 *d* I 5, I 6, I-8—थंपरे—, I-8—यद्बहुभिरर्थपरै—.

46 *b* P-4 परिपालया—, P-5 प्रतिपाल्या—. *c* So I-8, F , others लेखा, cp 40 with शरमत्व in a number of MSS

Colophon P-3—रतिप्रलापवर्णना नाम, others agree with ours

## ।। पञ्चमः सर्गः ।।

तथा समक्ष दहता मनोभव
पिनाकिना भग्नमनोरथा सती ।
निनिन्द रूप हृदयेन पार्वती
प्रियेषु सौभाग्यफला हि चारुता ।। १ ।।
इयेष सा कर्तुमवन्ध्यरूपता
समाधिमास्थाय तपोभिरात्मन ।
अवाप्यते वा कथमन्यथा द्वय
तथाविध प्रेम पतिश्च तादृश ।। २ ।।
निशम्य चैना तपसे कृतोद्यमा
सुता गिरीश प्रति सक्तमानसाम् ।
उवाच मेना परिरभ्य वक्षसा
निवारयन्ती महतो मुनिव्रतात् ।। ३ ।।
मनीषिता सन्ति गृहेऽपि देवतास्
तप क्व वत्से क्व च तावक वपु ।
पद सहेत भ्रमरस्य पेलव
शिरीषपुष्प न पुन पतत्रिण ।। ४ ।।
इति ध्रुवेच्छामनुशासती सुता
शशाक मेना न नियन्तुमुद्यमात् ।

1 *d* F —फलो हि

2 *c* F —प्यते तन् कथ—

3 *a* I 8 कृतोद्यता *b* So Vā 1, F , I 6 गिरीश प्रतिबद्धमानसाम्, P 4 गिरीश प्रतिशक्तमानसी, H 1 त्रिनेत्रप्रतिसक्तमा—, गिरीशप्रतिसक्तमानसाम् I 8 (but comments—श प्रति—) with G , S T , Bh Śloka omitted by P-5

4 *a* I 8 मनीषितामच गृहेषु देवता, followed by Br , Bhar , Gop , I 5—मध्यगृहेषु, सन्ति गृहेषु दे—Vā 3, F Bh *c* Vā 1 कोमल, P 2, P 3, I 1, I 2, I 3 पेशल

क ईप्सितार्थे स्थिरनिश्चयं मनः
पयश्च निम्नाभिमुखं प्रतीपयेत् ॥ ५ ॥
कदाचिदासन्नसखीमुखेन सा
मनोरथज्ञं पितरं मनस्विनी ।
अयाचतारण्यनिवासमात्मनः
फलोदयान्ताय तपःसमाधये ॥ ६ ॥
अथानुरूपाभिनिवेशतोषिणा
कृताभ्यनुज्ञा गुरुणा गरीयसा ।
प्रजासु पश्चात् प्रथितं तदाख्यया
जगाम गौरीशिखरं शिखण्डिमत् ॥ ७ ॥
विमुच्य सा हारमहार्यनिश्चया
विलोलयष्टिप्रविलुप्तचन्दनम् ।
बबन्ध बालारुणबभ्रु वल्कलं
पयोधरोत्सेधविशीर्णसंहति ॥ ८ ॥
यथा प्रसिद्धैर्मधुरं शिरोरुहैर्
जटाभिरप्येवमभूत्तदाननम् ।
न षट्पदश्रेणिभिरेव पङ्कजं
सशैवलासङ्गमपि प्रकाशते ॥ ९ ॥
प्रतिक्षणं सा कृतरोमविक्रियां
व्रताय मौञ्जीं त्रिगुणां बभार याम् ।
अकारि तत्पूर्वनिबद्धया तया
सरागमस्या रशनागुणास्पदम् ॥ १० ॥

5 a F धिवेच्छा—. c So B 1, F Majority—नार्थस्थिरनि—, cp गिरीश प्रति—गिरीशप्रति—in 3

8 b I-5, I-8 (अ) विलोन्दृष्टि प्रविलुप्तचन्दना, followed by Brhaspati, Bharata and Gopala

9 a I-8 notes प्रसिद्ध मधुरं as a variant found in I-5, I-6 and followed by Brhaspati, Bharata and Gopala

10 d Va-1, Vā 3, P 2, P-3, P-4, I-8, H 1 —[illegible]ना—

विसृष्टरागादधरान्निवर्तित
स्तनाङ्गरागारुणिताच्च कन्चुकात् ।
कुशाङ्कुरादानपरिक्षताङ्गुलि
कृतोऽक्षसूत्रप्रणयी तया कर ॥ ११ ॥
महार्हशय्यापरिवर्तनच्युतै
स्वकेशपुष्पैरपि या स्म दूयते ।
अशेत सा बाहुलतोपधायिनी
निषेदुषी स्थण्डिल एव केवले ॥ १२ ॥
पुनर्ग्रहीतु नियमस्थया तया
द्वयीपु निक्षेप इवार्पित द्वयम् ।
लतासु तन्वीषु विलासचेष्टित
विलोलदृष्ट हरिणाङ्गनासु च ॥ १३ ॥
अतन्द्रिता सा स्वयमेव वृक्षकान्
घटस्तनप्रस्रवणैर्व्यवर्धयत् ।

11 *a* I 8 records निसृष्ट—as a variant *b* F —रुणिताश्च क दुकात्, —रुणिताच्च कन्दुकात in majority followed by I 8 with com mentators We accept H 1 कन्चुकात् (comment —कन्चुकात् कर्पासकात a bodice or jacket) implying that she no longer busied her hands with adorning her lips and breasts *d* F —सूत्रप्रणया

13 *a* Va 1 गृहीतु *b* So I 8 with all commentators, read by P 2, P 3 P-4, I 2, I 6 Vā 1, P 5 द्वयेषु निक्षेपमिवा—with comment निक्षपमिव न्यासभूतमिव justifying 'द्वयेषु बहुवचनत्वम्', so is H 1, I 5 द्वयीपु निक्षेपमिवा—, G, S, T द्वयेऽपि निक्षेप इवार्पित द्वयम्, I 3, F द्वयेऽपि निक्षेपमिवार्पित द्वयम् *d* So Vā 1, G, S, T, Bh I 8 F, Vā 2, P 2, P-4, P 5, I 1, I 3, I 5 I 6, others—दृष्टि, cp *c* चेष्टित, with note on 65, cp Rv VIII 69*c*

गुहोऽपि येषा प्रथमात्तजन्मना
न पुत्रवात्सल्यमपाकरिष्यति ॥ १४ ॥
अरण्यबीजाञ्जलिदानलालिताम्
तथा च तस्या हरिणा विशश्वमु ।
यथा तदीयैर्नयने कुतूहलात्
पुर सखीनाममिमीत लोचने ॥ १५ ॥
कृताभिपेका हुतजातवेदस
त्वगुत्तरासङ्गवती निवीतिनीम् ।
दिदृक्षवस्ता मुनयोऽभ्युपागमन्
न धर्मवृद्धेषु वय समीक्ष्यते ॥ १६ ॥
विरोधिसत्त्वोज्झितपूर्वमत्सर
द्रुमैरपीप्टप्रसवार्चितातिथि ।
नवोटजाभ्यन्तरसभृतानल
तपोवन तच्च बभूव पावनम् ॥ १७ ॥
यदा फल पूर्वतप समाधिना
न तावता लभ्यममस्त काङक्षितम् ।

14 *b* So F, Bh., I-8 others—वर्णैरवर्धयत्, cp 56 व्यरोदयत्; I-8 records—प्रस्रविणोर—as variant with Br —प्रस्रवणी 'प्रस्रवणा- पय:सरण यस्या, but Bhar, Gop —विणी प्रस्रवितु शील यस्या' *c* So F others प्रथमाप्तजन्मना *d* F —करिष्यत्

16 *b* So I-5, I-8 with Brhaspati, Bharata and Gopala "कण्ठे लम्बितसूत्रयुक्ता, निवीत कण्ठलम्बित यज्ञसूत्र विद्यतेऽस्या, यतिव्रते स्त्रिया अपि कण्ठविलम्बियज्ञसूत्र ध्रियत, निवीत कण्ठलम्बितमित्यमर ", others अवीतिनीम् *c* So F, P-5, others ऋषयोऽभ्यु—; F —पु दय: सर्गो—

17 *b* F द्रिमैरमीप्ट—, Bh , I 8 द्रुमैरमीप्ट—followed by the four commentators , so also I 1, I-5, I-6, G , T , S , P-4—रपीप्टप्रसवार्चितातिथि, P-5, H I—रपीप्टप्रसवार्चितातिथि.

तदानवेक्ष्य स्वशरीरमार्दवं
तपो महत् सा चरितुं प्रचक्रमे ॥ १८ ॥
क्लमं ययौ कन्दुकलीलयापि या
तया मुनीनां चरितं व्यगाह्यत ।
ध्रुवं वपुः काञ्चनपद्मनिर्मितं
मृदु प्रकृत्यापि ससारमेव तत् ॥ १९ ॥
शुचौ चतुर्णां ज्वलतां शुचिस्मिता
हविर्भुजां मध्यगता सुमध्यमा ।
विजित्य नेत्रप्रतिघातिनीं प्रभाम्
अनन्यदृष्टिः सवितारमैक्षत ॥ २० ॥
तथाभितप्तं सवितुर्गभस्तिभिर्
मुखं तदीयं कमलश्रियं दधौ ।
अपाङ्गयोः केवलमस्य दीर्घयोः
शनैः शनैः श्यामिकया पदं कृतम् ॥ २१ ॥
अयाचितोपस्थितमम्बु केवलं
रसात्मकस्योडुपतेश्च रश्मयः ।

18 *a* P 5 क्लमं सर्वसमाधिसाधनं *c* So F, others (with Bh) तदानपेक्ष्य, cp note on 83 *d* P-4 F साधयितुं

19 *c* F ध्रुवं, I-5, I 6—काञ्चनधर्मि तनु— *d* So F, B 1, I 1, I 3, Vā 3, G, S, T, I 8 मृदु प्रकृत्या च ससारमेव च (with two चs), Vā 1, P 1, P 5 मृदु प्रकृत्या च सुसारमेव च, P 2 corrects सुसार into ससार—which is the reading of Bh

20 *a* T has शुचौ चतुर्णां ज्वलतां हविर्भुजां शुचिस्मिता मध्य—so G, S, majority accept our reading which is also found in F, Bh, I 8 with commentators, cp Rv XII, 41 *c* P-4—प्रतिघातिना

21. *a* So F, Bh, I 8 with Mallinātha, Bṛhaspati, Bharata and Gopāla Vā-1 तथापि तप्तं, I 5, T तथातितप्तं *b* I 8 records कमलाश्रियं as a variant, cp VII, 62 कोमल्यापि तप्तम् with अपि used in its proper sense

बभूव तस्या किल पारणाविधिर्
न वृक्षवृत्तिव्यतिरिक्तसाधन ॥ २२ ॥
निकामतप्ता द्विविधेन वह्निना
नभश्चरेणेन्धनसंभृतेन च ।
तपात्यये वारिभिरुक्षिता नवैर्
भुवा सहोष्माणममुञ्चदूर्ध्वगम् ॥ २३ ॥
स्थिता क्षण पक्ष्मसु ताडिताधरा
पयोधरोत्सेधनिपातचूर्णिता ।
वलीषु तस्या स्खलिता प्रपेदिरे
चिरेण नाभि प्रथमोदबिन्दव ॥ २४ ॥
शिलाशया तामनिकेतवासिनी
निरन्तरास्वन्तरवातवृष्टिषु ।
व्यलोकयन्नुन्मिषितैस्तडिन्मयैर्
महातप साक्ष्य इव स्थिता क्षपा ॥ २५ ॥
निनाय सात्यर्थहिमोत्किरानिला
सहस्यरात्रीरुदवासतत्परा ।
परस्पराक्रन्दिनि चक्रवाकयो
पुरो वियुक्ते मिथुने कृपावती ॥ २६ ॥

23 a I 1 प्रकामतप्ता, द्विविधेन Bh., P-5, P-3, I 2, I-S (correcting वि into द्वि) with Mallinatha, Brhaspati, Bharata and Gopala, H 1, F, G P 2 (correcting द्वि into वि), S, T विविधेन (=पञ्चविधेन) b Bh.—संभृतेन सा
24 d I-S नत, followed by Br, Bhar, Gop
25 b—रान्दन्तर—I 1, I-3, I-5, I-S (but here too Mallinātha रास्वन्तर—) P-5—वातवर्षेषु c F—तडित्त्वै—
26 a So I-S, P 2, Va 1, I-5, I-6 सात्यर्थहिमानरानिला with which agree P-3, P-4, I 1, I-3, H 1, सात्यन्तहिमानिरानिला G, S T F P-5 Bh

मुखेन सा पद्मसुगन्धिना निशि
प्रवेपमानाधरपत्रशोभिना ।
तुषारवृष्टिक्षतपद्मसम्पदां
सरोजसंधानमिवाकरोदपाम् ॥ २७ ॥
स्वयंविशीर्णद्रुमपर्णवृत्तिता
परा हि काष्ठा तपसस्तया पुनः ।
तदप्यपाकीर्णमतः प्रियंवदां
वदन्त्यपर्णेति च तां पुराविदः ॥ २८ ॥
मृणालिकाकोमलमेवमादिभिर्
व्रतैः स्वमङ्गं ग्लपयन्त्यहर्निशम् ।
तपः शरीरैः कठिनैरुपार्जितं
तपस्विनां दूरमधश्चकार सा ॥ २९ ॥
अथाजिनाषाढधरः प्रगल्भवाग्
ज्वलन्निव ब्रह्ममयेन तेजसा ।
विवेश कश्चिज्जटिलस्तपोवनं
शरीरबद्धः प्रथमाश्रमो यथा ॥ ३० ॥
तमातिथेयी बहुमानपूर्वया
सपर्यया प्रत्युदियाय पार्वती ।

28 *d* So F, G, S, T, Bh, I 8, Vā 3, but Vā 1, P 2 P 3, P 4, P 5, I 1, I 2, I 3, I 5 H 1, B 1—न्त्यपर्णामिति ता, noted by I 8 as a variant and justified by Br, Bhar, Gop

29 *a* Bh, F, P 5—णिकापेलवमेव— *b* P 5 व्रतैस्तदङ्गं क्षपयन्त्य— but on margin ग्लपय— After this Vā 1 reads

सुरास्तदुद्वीक्ष्य नगेन्द्रकन्यया
धृतं तपः शम्भुवशक्रियाश्रमम् ।
ययाचिरे तं प्रणिपत्य दुःखिता
पतिं पशूनां सुतमाजिहेतवे ॥ ३० ॥

This is not found in F, P 5, Vā 3, G S T I 8

भवन्ति साम्येऽपि निविष्टचेतसा
वपुर्विशेषेष्वतिगौरवा क्रिया ॥ ३१ ॥
विधिप्रयुक्तां प्रतिगृह्य सत्क्रियां
परिश्रमं नाम विनीय च क्षणम् ।
उमां स पश्यन्नृजुनैव चक्षुषा
प्रचक्रमे वक्तुमनुज्झितक्रम ॥ ३२ ॥
अपि क्रियार्थं सुलभं समित्कुशं
जलान्यपि स्नानविधिक्षमाणि ते ।
अपि स्वशक्त्या तपसि प्रवर्तसे
शरीरमाद्यं खलु धर्मसाधनम् ॥ ३३ ॥
अपि त्वदावर्जितवारिसंभृतं
प्रवालमासामनुबन्धि वीरुधाम् ।
चिरोज्झितालक्तकपाटलेन ते
तुलां यदारोहति दन्तवाससा ॥ ३४ ॥
अपि प्रसन्नं हरिणेषु ते मनः
करस्थदर्भप्रणयापहारिषु ।

31. *a* P-5 बहुमानस्पया *d* So Va 1, P 2, P-3, P-4, P-5, I 2, I-5, I-6, I-8 with Brhaspati, Bharata and Gopāla,—विशेषेष्वतिगौ—Bh., F, G, S, T, I 8 (with Mallinatha) I 1, I-3, Va-3, cp 53 अधिश्रिय

32 *a* Bh., G परिगृह्य *d* Cp Rv VI, 70 प्रचक्रमे वक्तुमनुक्रमज्ञा

33 *a* So Va 1, P-5, F, I 1, I 2, S, G, T, अयि Vā-3, P 2, P-3, P-4, I-8, H 1, I-5, I-6, but जलान्यपि uniformly in all, I-8 अयि क्रियार्थं—, cp Rv V, 4 अप्यग्रणी , 10 अपि प्रसन्नेन , 11 अप्यात्रया exactly in a similar context and where अयि will make the reading awkward, confusion of अपि and अयि may be noted in the succeeding ślokas *b* P-4, I 1, I 2, I-3, H 1, B I विधौ क्षमाणि ते, followed by four commentators

य उत्पलाक्षि प्रचलैर्विलोचनैस्
तवाक्षिसापत्न्यमिव प्रयुञ्जते ॥ ३५ ॥
यदुच्यते पार्वति पापवृत्तये
न रूपमित्यव्यभिचारि तद्वचः ।
तथा हि ते शीलमुदारदर्शने
तपस्विनामप्युपदेशतां गतम् ॥ ३६ ॥
विकीर्णसप्तर्षिबलिप्रहासिभिस्
तथा न गाङ्गैः सलिलैर्दिवश्च्युतैः ।
यथा त्वदीयैश्चरितैरनाविलैर्
महीधरः पावित एष सान्वयः ॥ ३७ ॥
अनेन धर्मः सविशेषमद्य मे
त्रिवर्गसारः प्रतिभाति भाविनि ।
त्वया मनो निर्विषयार्थकामया
यदेक एव प्रतिगृह्य सेव्यते ॥ ३८ ॥
प्रयुक्तसत्कारविशेषमात्मना
न मां परं सम्प्रतिपत्तुमर्हसि ।
यतः सतां संनतगात्रि संगतं
मनीषिभिः साप्तपदीनमुच्यते ॥ ३९ ॥

35 *c* H 1 यदुत्पलाक्षि— *d* I 1, G, F, Bh, I 8 क्षिमादृश्य—, followed by Mal, Br, Bhar, but Gop सापत्न्य

37 *a* Vā 2 विशीर्ण—, I 6 प्रकीर्ण—, Vā 3 विशीर्णसप्तर्षि with comment विशीर्णैः पतितैः, Vā 1, H 1—बलिप्रग्राहिभिः, I 5, I 8, बलिप्रकाशिभिः with Brhaspati, Bharata प्रभासिभिः recording प्रकाशिभिः as a variant, Gopala however—बलिप्रभाभिः We follow F, P 5 and Mallinātha in I 8

38 *a* F —ऐतम्नत्वये— *b* F भाविनी, Vā 1 भामिनि

39 *a* P 5 प्रयुक्तसत्कार— *d* P 4, I 3 सप्तपदीन—, P 3 साप्तपदीनमिष्यते

अतोऽत्र किंचिद् भवतीं बहुक्षमां
द्विजातिभावादुपपन्नचापल ।
अयं जन प्रष्टुमनास्तपोधने
न चेद् रहस्य प्रतिवक्तुमर्हसि ॥ ४० ॥
कुले प्रसूति प्रथमस्य वेधस
त्रिलोकसौन्दर्यमिवोदितं वपु ।
अमृग्यमैश्वर्यसुखं नवं वयस्
तप फलं स्यात् किमत परं वद ॥ ४१ ॥
किमित्यपास्याभरणानि यौवने
धृतं त्वया वार्धकशोभि वल्कलम् ।
वद प्रदोषे स्फुटचन्द्रतारका
विभावरी यद्यरुणाय कल्पते ॥ ४२ ॥
भवत्यनिष्टादपि नाम दु सहान्
मनस्विनीनां प्रतिपत्तिरीदृशी ।

40 *a* P-5 रहस्य— *d* So F, P-5, G, S, T, Bh., Mallinātha in I-8, प्रतिगोप्तुमर्हसि Va 1, P 2, P-3, P-4, I 1, I 2, I-3, H 1, I-5 प्रतिगोप्तुमिच्छसि, Bṛhaspati and Bharata प्रतिपादयिष्यसि in I-8, *left out by Gop*

41 *d* I 1, Va 1, I-6, I-8, B-1 परं वद

42 Śloka omitted by Va-3 It is read after अलम्नमाना— (44) by Bh, F, I-8, P 3, P-4, P 5 I 1, I 2, I 3, I-5, I 6 G, S, T, S agrees with our order *b* त्वया धृतं I 6 *c* I 5 I 6 विनिकीर्णतारका, I-8 Bṛhaspati, Bharata and Gopala विनिकीर्ण तारका (=सत्यपि, स्वयत्वा), others स्फुटचन्द्रतारका, followed by Mallinātha in I-8, but in G, S, T, Mallinātha's commentary concludes "दीप्यमानचन्द्राढ्यतारके प्रदोषे यद्यरुण वर्धेत तदा विभूषणपरिहारेण तव वल्कलधारण संघटते इति भाव" This may imply—तारके in the text I-8 omits this portion

विचारमार्गप्रहितेन चेतसा
न दृश्यते तच्च तनूदरि त्वयि ॥ ४३ ॥
अनन्यशोभाभिभवेयमाकृतिर्
विमानना सुभ्रु कुत पितुर्गृहे ।
पराभिमर्शो न तवास्ति क कर
प्रसारयेत् पन्नगरत्नसूचये ॥ ४४ ॥
दिव यदि प्रार्थयसे वृथा श्रम
पितु प्रदेशास्तव देवभूमय ।
अथोपयन्तारमल समाधिना
न रत्नमन्विष्यति मृग्यते हि तत् ॥ ४५ ॥
निवेदित निश्वसितेन सोष्मणा
मनस्तु मे सशयमेव गाहते ।
न दृश्यते प्रार्थयितव्य एव ते
भविष्यति प्रार्थितदुर्लभ कथम् ॥ ४६ ॥
अहो स्थिर कोऽपि तवेप्सितो युवा
चिराय कर्णोत्पलशून्यता गते ।
उपेक्षते य श्लथलम्बिनीरिमा
जटा कपोले कलमाग्रपिङ्गला ॥ ४७ ॥

43 *d* So P 5, H 1 others कृशोदरि, followed by commentators

44 So I 5, I 6, I 7, I 8 in Br Bhar, Gop, majority अन्यशोकाभि—, found also in F, Bh *c* P 5 परावमर्शो, I 8 पराभिमर्षो *d* I 5, I 6—सूचिर् noted by I 8

46 *a* P 2, P-4, I 8 नि श्व—

47 *c* and *d* P-4 अपेक्षते, I 8 उपेक्षते but cp Gopāla उपेक्षते अङ्गीकरोति implying अपेक्षते, we follow F which gives in footnotes "उपेक्षते य कलमाग्रपिङ्गला जटा कपोले श्लथलम्बिनीरिमा ।' Vā 3, P 5 उपेक्षते य श्लथबन्धलम्बिनीर्जटा कपोले । I 8 उपेक्षते य श्लथबन्धना जटा कपोलदेशे कलमा—, Vā 1, P 2

मुनिव्रतैस्त्वामतिमात्रकर्शिता
दिवाकराप्लुष्टविभूषणास्पदाम् ।
शशाङ्करेखामिव पश्यतो दिवा
सचेतस कस्य मनो न दूयते ॥ ४८ ॥

अवैमि सौभाग्यमदेन वञ्चित
तव प्रिय यश्चतुरावलोकिन ।
करोति लक्ष्य रविमस्य चक्षुषो
न वक्त्रमात्मीयमरालपक्ष्मण ॥ ४९ ॥

कियच्चिर श्राम्यसि गौरि विद्यत
ममापि पूर्वाश्रमसचित तप ।
तदर्धभागेन लभस्व काङ्क्षित
वर तमिच्छामि च साधु वेदितुम् ॥ ५० ॥

इति प्रविश्याभिहिता द्विजन्मना
मनोगत सा न शशाक शसितुम् ।
अथो वयस्या परिपार्श्ववर्तिनी
विवर्तितानञ्जननेत्रमैक्षत ॥ ५१ ॥

सखी तदीया तमुवाच वर्णिन
निबोध साधो तव चेत्कुतूहलम् ।
यदर्थमम्भोजमिवोष्णवारण
कृत तप साधनमेतया वपु ॥ ५२ ॥

P-3, P-4, I-3, B 1, I 2 उपमन य दग्धवन्निर्नीर्जगा कपालदेश कल्माष्र—, Bh. उपमन य दग्धवन्मिवनीर्जगा कपालदशे कल्माष्र-पिङ्गला..

48 *b* P-4 दिवाकरस्पृष्टनिभू— *c* So F , others रेखा—

49 *c* So I-8 according to Brhaspatı, Bharata and Gopala, I-5, I-6 , others चिरमस्य चक्षुष।, P-3 reads 49 after 50

50 *a* B-1 सुभ्रु वि—

51 *c* P-3 अतो वयस्या, I-8 तता

52 *a* P-5, I 1, I 3—या निजगाद व— *b* I-5 विदाय

इय महेन्द्रप्रभृतीनधिश्रियश्
चतुर्दिगीशानवमन्य मानिनी ।
अरूपहार्यं मदनस्य निग्रहात्
पिनाकपाणि पतिमाप्तुमिच्छति ॥ ५३ ॥
असह्यहुकारनिवर्तित पुरा
स्मरारिमप्राप्तमुख शिलीमुख ।
इमा हृदि व्यायतपातमक्षिणोद्
विशीर्णमूर्तेरपि पुष्पधन्वन ॥ ५४ ॥
तदा प्रभृत्युन्मदना पितुर्गृहे
ललाटिकाचन्दनधूसरालका ।
न जातु बाला लभते स्म निर्वृति
तुषारसघातशिलातलेष्वपि ॥ ५५ ॥
उपात्तवर्णे चरिते पिनाकिन
सबाष्पकण्ठस्खलितै पदैरियम् ।
अनेकश किनरराजकन्यका
वनान्तसगीतसखीर्व्यरोदयत् ॥ ५६ ॥
त्रिभागशेषासु निशासु च क्षण
निमील्य नेत्रे सहसा व्यबुध्यत ।
क्व नीलकण्ठ व्रजसीत्यलक्ष्यवाग्
असत्यकण्ठार्पितबाहुबन्धना ॥ ५७ ॥

53 *a* Cp 31 अधिगौरवा *b* So Bh , I 8 with commentators, others—मत्य *c* I 5 विग्रहात्

54 *b* F पुरारि— *c* Cp IV, 21 क्षिता *d* F विनष्टमूर्ते—

55 *a* P 5, I 3, I 5, I 6 तत प्रभृत्यु—, I 8 corrects तत into तदा

56 *a* I 5 उपात्तवर्णैश्चरितै , I 8 उदात्तवर्णैश्चरितै (according to Brhaspatı Bharata and Gopāla) recording उपात्तवर्णे चरिते as a variant *d* Va 1, F, Bh, G—र्रोदयत्, cp 14 व्यवर्धयत्

57 *a* P 5—सु निमीलिता क्षण

यदा बुधैः सर्वगतस्त्वमुच्यसे
न वेत्सि भावस्थमिमं कथं जनम् ।
इति स्वहस्तालिखितश्च मुग्धया
रहस्युपालभ्यत चन्द्रशेखरः ॥ ५८ ॥

यदा च तस्याधिगमे जगत्पतेर्
अपश्यदन्यं न विधिं विचिन्वती ।
तदा सहास्माभिरनुज्ञया गुरोर्
इयं प्रपन्ना तपसे तपोवनम् ॥ ५९ ॥

द्रुमेषु सख्या कृतजन्मसु स्वयं
फलं तपःसाक्षिषु दृष्टमेष्वपि ।
न तु प्ररोहाभिमुखोऽपि दृश्यते
मनोरथोऽस्याः शशिमौलिसंश्रयः ॥ ६० ॥

न वेद्मि स प्रार्थितदुर्लभः कदा
सखीभिरस्राकुलमीक्षितामिमाम् ।
तपःकृशामभ्युपपत्स्यते सखीं
वृषेव सीतां तदवग्रहक्षताम् ॥ ६१ ॥

58 *a* So F, G, I-5, I-6, I-8, G, S, T, P 2 corrects यदा into यथा, F यदा बुधैः स्वगतस्त्वमुच्यसे *c* So Va 1, P-5, I-8, P 2 स्वहस्तालिखित—, P 2 corrects स्वहस्तालिखित—into—स्तोल्लि—; I 1, I-3, G, S, T, Bh. स्वहस्तोल्लिखित— (cp Rv VI, 32 पत्रालि— ), B-2 स्वहस्तलिखित (with comment लिखित) perhaps original reading replaced by its meaning उल्लिखितः. But cp A Śākuntala VI, 6 स्मरालिखित etc.,—Rv III, 15 वपुःप्रकर्षादजयत् इव showing Kalidasa's preference for आ + √लिख् 'paint'

59 *a* F यदाति *b* P-5 निचिन्वता

60 *a* So F., others न च

61 *b* So Va 1, P 2, P-3, P-4, P-5 I 1, I-3, I-5 अस्राकुलवीक्षिता—; I-6—अश्रान्तनिरीक्षिता—, H 1—रश्रान्तवीक्षिता—, Va-3—रस्रान्तनिरीक्षिता—but in comment अश्रान्तमनवरतं यथा तथा, I-8 —रस्रोत्तरवीक्षिता—, G रस्रोत्तरमीक्षिता— So S, T, Bh.

अगूढसद्भावमितीङ्गितज्ञया
निवेदितो नैष्ठिकसुन्दरस्तया ।
अयीदमेव परिहास इत्युमाम्
अपृच्छदव्यञ्जितहर्षलक्षण ॥ ६२ ॥
अथाग्रहस्ते मुकुलीकृताङ्गुलौ
समर्पयन्ती स्फटिकाक्षमालिकाम् ।
कथचिदद्रेस्तनया मिताक्षर
चिरव्यवस्थापितवागभाषत ॥ ६३ ॥
यथाश्रुत वेदविदा वर त्वया
जनोऽयमुच्चै पदलङ्घनोत्सुक ।
तप किलेद तदवाप्तिसाधन
मनोरथानामगतिर्न विद्यते ॥ ६४ ॥
अथाह वर्णी विदितो महेश्वरस्
तदर्थिनी त्व पुनरेव वर्तसे ।
अमङ्गलाभ्यासरत विचिन्त्य त
तवानुवृत्ति न च कर्तुमुत्सहे ॥ ६५ ॥
अवस्तुनिर्बन्धपरे कथ नु ते
करोऽयमामुक्तविवाहकौतुक ।

62 *b* निवेदिते Bharata and Gopāla in I 8 *c* P 5 अपीदमेव, I 8—हासमित्यु—justified by Br and Bhar

63 F ज्याद्रहस्ते *b* Va 3 I 2 समर्थयन्ती

65 *a* F तथाह *c* So P 5, I 1, I 2 I 3, Vā 1, F I 8 अमङ्गलाभ्यासरति with Mallinātha (अमङ्गलाभ्यासेऽमङ्गलाचारे रतिर्यस्य), Bṛhaspati (अमङ्गलेषु अस्थिधारणश्मशानवासादिषु अभ्यासेन रतिर्यस्य), Bharata (अमङ्गलस्यास्थिभस्मश्मशानवासादिरूपस्य कर्मणोऽभ्यासे परिशीलने रतिर्यस्य) and Gopāla (अमङ्गल श्मशान तस्याभ्याश समीप तत्र रतिर्यस्य) cp note on 13 *d* I 5—नुवृत्त, P 5 न हि

करेण शम्भोर्वलयीकृताहिना
सहिष्यते तत्प्रथमावलम्बनम् ॥ ६६ ॥
त्वमेव तावत् परिचिन्तय स्वयं
कदाचिदेते यदि योगमर्हतः ।
वधूदुकूलं कलहंसलक्षणं
गजाजिनं शोणितबिन्दुवर्षि च ॥ ६७ ॥
चतुष्कपुष्पप्रकरावकीर्णयोः
परोऽपि को नाम तवानुमन्यते ।
अलक्तकाङ्कानि पदानि पादयोर्
विकीर्णकेशास्थिपरेतभूमिषु ॥ ६८ ॥
अयुक्तरूपं किमतः परं वद
त्रिनेत्रवक्षःसुलभं तवापि यत् ।
स्तनद्वयेऽस्मिन् हरिचन्दनास्पदे
पदं चिताभस्मरजः करिष्यति ॥ ६९ ॥
इयं च तेऽन्या पुरतो विडम्बना
यदूढया वारणराजहार्यया ।
विलोक्य वृद्धोक्षमधिष्ठितं त्वया
महाजनः स्मेरमुखो भविष्यति ॥ ७० ॥

66 *b* P-5—विवाहकङ्कण, others—कौतुक (=मङ्गलसूत्रम्) *c* Vā 1, H-1 भुजेन

67 *c* So F, Bh., others—दुकूलं च महत्—with च redundant

68 *b* F, Bh.—नुमन्यते *c* and *d* पादयोः प्रकीर्णं—I-5 *d* So I-6, others—केशासु परेतभूमिषु, a typical illustration of how a manuscript, though alone in a particular reading, helps to establish the original text No commentator has —केशास्थिपरे—.

69 *a* So P-5, F, Vā-3, G, others भवेत् *c* P-5 कुचद्वये—, Vā-3, P-3, P-5, I 1, I 2, I-3—चन्दनाङ्किते perhaps under influence of हरिचन्दनाङ्किते, Rv III, 59

द्वय गत सम्प्रति शोचनीयता
समागमप्रार्थनया कपालिन ।
कला च सा कान्तिमती कलावतस्
त्वमस्य लोकस्य च नेत्रकौमुदी ॥ ७१ ॥

वपुर्विरूपाक्षमलक्ष्यजन्मता
दिगम्बरत्वेन निवेदित वसु ।
वरेषु यद् वालमृगाक्षि मृग्यते
तदस्ति कि व्यस्तमपि त्रिलोचने ॥ ७२ ॥

निवर्तयास्मादसदीप्सितान्मन
क्व तद्विधस्त्व क्व च पुण्यलक्षणा ।
अपेक्ष्यते साधुजनेन वैदिकी
श्मशानशूलस्य न यूपसत्क्रिया ॥ ७३ ॥

इति द्विजातौ प्रतिकूलवादिनि
प्रवेपमानाधरलक्ष्यकोपया ।
विकुञ्चितभ्रूलतमाहिते तया
विलोचने तिर्यगुपान्तलोहिते ॥ ७४ ॥

उवाच चैन परमार्थतो हर
न वेत्सि नून यत एवमात्थ माम् ।

71 *a* B 1 omits this śloka *b* So I 8, F , others कपालिन

72 *a* Va 3 अलक्ष्यरूपता (perhaps for alliteration) 73 *d* So F, Bh , Vā 1 , P-5 reads उपेक्षते साधुजनो न वैदिकी but in comment अपेक्षते अयपते। अत्र परार्धे त्रिचतुराणि पाठान्तराणि प्रचरन्ति। I 8 उपेक्ष्यते साधुजनेन वैदिकी श्मशानशूलस्य न यूपसत्क्रिया (but the four commentators अपेक्ष्यते), I 1 अपेक्षते साधुजनेन वैदिकी on which H 1 is an improvement अपेक्षते साधुजनो न वैदिकी श्म यूपसत्क्रियाम्

74 *c* Vā 1—भ्रूलतया—, I 8—लतया कृते तया—(noted by Bṛhaspati Bharata and Gopala)

अलोकसामान्यमचिन्त्यहेतुक
द्विषन्ति मन्दाश्चरितं महात्मन ॥ ७५ ॥
विपत्प्रतीकारपरेण मङ्गल
निषेव्यते भूतिसमुत्सुकेन वा ।
जगच्छरण्यस्य निराशिष सत
किमेभिराशोपहतात्मवृत्तिभि ॥ ७६ ॥
अकिंचन सन् प्रभव स सपदा
स लोकनाथ पितृसद्मगोचर ।
स भीमरूप शिव इत्युदीर्यते
न सन्ति याथार्थ्यविद पिनाकिन ॥ ७७ ॥
विभूषणोद्भासि पिनद्धभोगि वा
गजाजिनालम्बि दुकूलधारि वा ।
कपालि वा स्यादथवेन्दुशेखर
न विश्वमूर्तेरवधार्यते वपु ॥ ७८ ॥
तदङ्गसम्पर्शमवाप्य कल्पते
ध्रुव चिताभस्मरजो विशुद्धये ।

75 *d* So Va 1, P-1, F with majority—त्मनाम्, read by I 8 according to Mallinātha, Bharata and Gopāla Brhaspati, however, reads पिनाकिन which supports our 'singular' reading, for a similar confusion cp 83 महता—महत

76 *d* F किमभिराशाभहतात्म—, I-8 reads क्रियाभि recording किमेभि, cp Brhaspati (आभि आशापहतात्मवृत्तिभि विषयस्पृहापष्टुतामिरात्मवृत्तिभिर्बुद्धिप्रवृत्तिभि किम्), Bharata (आभि वैषयिकीभि आशया तृष्णया उपहत आत्मा येषा त तादृशाना जनाना वृत्तिभि क्रियाभि मङ्गल्चेष्टाभि किम्) and Gopāla who leaves the word unexplained एभि मङ्गल्यै Mallinātha

77 *a* P-4 अकिंचन सुप्रभव स *b* G, Bh. त्रिलोकनाथ- *d* Vā-1, I 2, H 1 याथात्म्यविद I 2 reads 81 (अनपदस्तस्य ) after 77

78 *a* F विभागणोद्भासि *c* Vā 1, P 2, I 6—दथ चन्द्र—through अथ चेन्दुशेखर read by Vā-3

तथा हि नृत्याभिनयक्रियाच्युत
विलुप्यते मौलिभिरम्बरौकसाम् ॥ ७९ ॥
असपदस्तस्य वृषेण गच्छत
प्रभिन्नदिग्वारणवाहनो वृषा ।
करोति पादावुपगम्य मौलिना
विनिद्रमन्दाररजोऽरुणाङ्गुली ॥ ८० ॥
विवृण्वता दोषमपि च्युतात्मना
त्वयैकमीश प्रति साधु भाषितम् ।
यमामनन्त्यात्मभुवोऽपि कारण
कथ स लक्ष्यप्रभवो भविष्यति ॥ ८१ ॥
अल विवादेन यथा श्रुतस्त्वया
तथाविधस्तावदशेषमस्तु स ।
ममात्र भावैकरस मन स्थित
न कामवृत्तिर्वचनीयमीक्षते ॥ ८२ ॥
निवार्यतामालि किमप्यय वटु
पुनर्विवक्षु स्फुरितोत्तराधर ।
न केवल यो महतोऽपभाषते
शृणोति तस्मादपि य स पापभाक् ॥ ८३ ॥

79 *a* G, Bh तदङ्गमसग—, cp III, 36 अङ्गेण सस्पर्श— *c* I 8 तयाभिनृत्याभिनय—, P-5 तथा हि नृत्ताभि— *d* So Vā 1, P-3, P 5, I 1, I 2, I 3, I 6, H 1 (with विलुप्यते म्रियते), I 8 with Bhar, Gop विलुप्यते गृह्यते but विग्प्यिने in F, Bh (comment विल्प्यिते म्रियते), Vā 3, P 2, G, S, T

80 *d* F —रुणाङ्गुलो

81 *a* Va 1, F, G, Bh विवक्षता, recorded by I 8 as a variant

82 *a* I 8, Bh यथा श्रुत— *d* F —कामवृत्तिर्वंदनीयमी—, P-5—वृत्तिर्वचनीयदर्शिनी

83 *a* Bh वटु *c* Vā 1, I 1, I 2 महतोऽवभा—, B 1, B 2—महतो विभापते, H-1 महतोऽवभाषते, Bh, I 8 (with four comments

इतो गमिष्याम्यथवेति वादिनी
चचाल साग्रस्तनभिन्नवल्कला ।
स्वरूपमास्थाय च तां कृतस्मितः
समाललम्बे वृषराजकेतनः ॥ ८४ ॥
तं वीक्ष्य वेपथुमती सरसाङ्गयष्टिर्
निक्षेप एव पदमुद्धृतमर्पयन्ती ।
मार्गाचलव्यतिकराकुलितेव सिन्धुः
शैलाधिराजतनया न ययौ न तस्थौ ॥ ८५ ॥
अद्य प्रभृत्यवनताङ्गि तवास्मि दासः
क्रीतस्तपोभिरिति वादिनि चन्द्रमौलौ ।
अह्नाय सा नियमजं क्लममुत्ससर्ज
क्लेशः फलेन हि पुनर्नवतां विधत्ते ॥ ८६ ॥

॥ इति श्रीकुमारसम्भवे महाकाव्ये कविकालिदासकृतौ उमातपःफलप्रदानं नाम पञ्चमः सर्गः ॥

महतोऽसमाप्ते) with majority महतोऽसमाप्ते, cp note on 18 *d* F श्रुणाति

84 *b* I-8—गौरी स्तन—, P-5—सा च स्तन—, majority—बाला-स्तन— We follow F which is significant, for अग्रस्तन cp Mallinatha on स्यादग्रस्तन 63 *c* So majority, F शुचिस्मित-

85 *b* So Va 1, Brhaspati, Bharata and Gopala in I-8, Bh., F, Mal. निक्षेपणाय पद—, so Vā-3, G, S, T, —मुद्धृतमु— Vā-3, Bh., so I-8 with Brhaspati, Bharata, Gopāla and Mallināthа, others—मुद्वहन्ती

Colophon Vā-3—गौरीतपःफलोदया नाम—, P-3—गौरीतपःफलो नाम—, P-4—उमातपःफलोदया नाम—, I 1—पार्वतीफलोदया नाम—, I 1 omits 4th canto without even remotest mention of it, I-5 —उमाफलोदया नाम—with which agrees I-8, G—गौरीतपःफलोदया नाम—, S—तपःफलोदया नाम—with which agrees T, F इति श्रीकालिदासकृतौ कुमारसम्भवे महाकाव्ये पञ्चमः सर्गः । श्रीरामचन्द्रार्पणमस्तु । श्रीकाकुलेशाय मङ्गलम् । श्रीराम । Bh. इति कालिदासकृतौ कुमारसम्भवे महाकाव्ये फलोदया नाम पञ्चमः सर्गः

## ॥ षष्ठः सर्गः ॥

अथ विश्वात्मने गौरी संदिदेश मिथः सखीम् ।<br>
दाता मे भूभृतां नाथः प्रमाणीक्रियतामिति ॥ १ ॥<br>
तया व्याहृतसंदेशा सा बभौ निभृता प्रिये ।<br>
चूतयष्टिरिवाभ्याशे मधौ परभृतोन्मुखी ॥ २ ॥<br>
स तथेति प्रतिज्ञाय विसृज्य कथमप्युमाम् ।<br>
ऋषीन् ज्योतिर्मयान् सप्त सस्मार स्मरशासनः ॥ ३ ॥<br>
ते प्रभामण्डलैर्व्योम द्योतयन्तस्तपोधनाः ।<br>
सारुन्धतीकाः सपदि प्रादुरासन् पुरः प्रभोः ॥ ४ ॥<br>
आप्लुतास्तीरमन्दारकुसुमोत्करवीचिषु ।<br>
आकाशगङ्गास्रोतःसु दिङ्नागमदगन्धिषु ॥ ५ ॥<br>
मुक्तायज्ञोपवीतानि बिभ्रतो हैमवल्कलाः ।<br>
रत्नाक्षसूत्राः प्रव्रज्यां कल्पवृक्षा इवाश्रिताः ॥ ६ ॥<br>
अधःप्रस्थापिताश्वेन समावर्जितकेतुना ।<br>
सहस्ररश्मिना शश्वत् सप्रणाममुदीक्षिताः ॥ ७ ॥

1 5 सखी पिता

2 , P 5 I 1, I 3, majority स्याने, cp V, 65c

4 a P 5 पुरोगता, B 1, B 2 प्रभो पुर

5 Sloka omitted by I 8 b F, H 1, G, Bh —कुसुमोत्किर— (comm उत्किरति विक्षिपन्ती व्युत्किरा), H 1—त्करवाहिषु c G व्योमगङ्गाप्रवाहेषु, Vā 1, Vā 3 H 1—श्रोतःसु, Va 1 दिग्नाग—

6 b B 1, I 8 बिभ्राणा in Bṛhaspati Bharata and Gopāla, but बिभ्रतो according to Mallinātha हैमबन्धना I 8 in Bharata but हैमवल्कला (Bh) in Gopāla, cp हेमवेत्र III, 41 c रत्ना क्षयुक्ता noted by Bharata in I 8 as a variant

7 a B 1 प्रस्थापिता— c रश्मिना साक्षात् F, G Bh B 1 puts this śloka after 8th

आसक्तबाहुलतया सार्धमुद्धृतया भुवा ।
महावराहदंष्ट्रायां विश्रान्ता प्रलयापदि ॥ ८ ॥
सर्गशेषप्रणयनाद् विश्वयोनेरनन्तरम् ।
पुरातना पुराविद्भिर्धातार इति कीर्तिता ॥ ९ ॥
प्राक्तनाना विशुद्धाना परिपाकमुपेयुषाम् ।
तपसामुपभुञ्जाना फलान्यपि तपस्विन ॥ १० ॥
तेषा मध्यगता साध्वी पत्यु पादार्पितेक्षणा ।
साक्षादिव तप सिद्धिर्बभासे बह्वरुन्धती ॥ ११ ॥
तामगौरवभेदेन मुनीश्चापश्यदीश्वर ।
स्त्रीपुमानित्यनास्थैषा वृत्त हि महित सताम् ॥ १२ ॥
तद्दर्शनादभूच्छम्भोर्भूयान् दारार्थमादर ।
क्रियाणा खलु धर्म्याणा दापत्न्य मूलसाधनम् ॥ १३ ॥
धर्मेणापि पद शर्वे कारिते पार्वती प्रति ।
पूर्वापराधभीतस्य कामस्योच्छ्वसित मन ॥ १४ ॥
अथ ते मुनय सर्वे पूजयित्वा जगद्गुरुम् ।
इदमूचुरनूचाना प्रीतिकण्टकितत्वच ॥ १५ ॥

8 *b* F —उद्धृतया

9 *d* P-5 धातार इव, so I-5, Vā 1

10 *c* B-1 तपसा परिमु—

12 *b* Bharata in I-8 records—चार्वपरी—as a variant *c* I-8 —पुमानिति नास्थैषा, but even here the commentators read अनास्थैषा

13 *b* So F, G, Bh., P-5, Vā-1, H 1 भूया *d* So P-4, Vā 1, I 2, P-5, I-5, B 2 सत्पत्न्या मूलसाधनम्, Bh, B-1, F सत्पत्न्या मूलकारणम्, I 1, I-3, I-8 दारन्य मूलसाधनम् with Mallinātha सत्पत्न्यो मूलकारणम्, Bṛhaspati दारा न मूलकारणम्, Bharata and Gopāla दारन्य मूलसाधनम्

15 *a* G, Bh., B-2 मानयित्वा जग—, H 1, H 2 प्रणिपत्य ज—, B-1 मानयित्वा जगत्पतिम् *d* P-4—क्तित वच, noted by Gop in I-8

यद् ब्रह्म सम्यगाम्नात यदग्नौ विधिवद् धुतम् ।
यच्च तप्त तपस्तस्य विपक्व फलमद्य न ॥ १६ ॥
यदध्यक्षेण जगता वयमारोपितास्त्वया ।
मनोरथस्याप्यपथ मनोविषयमात्मन ॥ १७ ॥
यस्य चेतसि वर्तेथा स तावत् कृतिना वर ।
किं पुनर्ब्रह्मयोनेर्यस्तव चेतसि वर्तते ॥ १८ ॥
सत्यमर्काच्च सोमाच्च परमध्यास्महे पदम् ।
अद्य तूच्चैस्तर तस्मात् स्मरणानुग्रहात्तव ॥ १९ ॥
त्वत्सभावितमात्मान बहु मन्यामहे वयम् ।
प्राय प्रत्ययमाधत्ते स्वगुणेषूत्तमादर ॥ २० ॥
या न प्रीतिर्विरूपाक्ष त्वदनुध्यानसभवा ।
सा किमावेद्यते तुभ्यमन्तरात्मासि देहिनाम् ॥ २१ ॥
साक्षाद् दृष्टोऽसि न पुनर्विद्मस्त्वा वयमञ्जसा ।
प्रसीद कथयात्मान न धिया पथि वर्तसे ॥ २२ ॥
किं येन सृजसि व्यक्तमुत येन बिभर्षि तत् ।
अथ यस्तस्य सहर्ता भाग कतम एष ते ॥ २३ ॥

16 *b* So P 5 explained by Bhar in I 8, others विधिना

17 *c* Bh G, F —स्वाविषय obviously an explanation from comment

19 *b* I 8 H 1—पदमध्यास्महे वयम्, F नित्यमर्काच्च सोमाच्च पदमध्यास्महे वयम् *c* Vā 1 तूच्चैस्तरा, Bh —तर ताभ्या, H 1 तूच्चैस्तरामन्तस्मर—(with comment अन्त मध्ये) I 8 तूच्चतरैस्तस्मात् but in comment Mallinātha, Brhaspati, Bharata and Gopāla alike follow तूच्चैस्तरम्

21 *a* I 5, I 8—निर्विंशाग्राक्ष in Br, Bhar, Gop *c* P-4, P 5, *I 1, I 2, I 3, H 1* किमाख्यायते

22 *c* H 1, H-4 दर्शयात्मान

23 *c* I 5, H 1, H-4, B 1, G Bh अथ विश्वस्य स—, so I 8 with Bharata following योऽस्य वि—सहर्ता

अथवा सुमहत्येषा प्रार्थना देव तिष्ठतु ।
चिन्तितोस्मितिनाम्नावच्छाधि न करवाम किम् ॥ २४ ॥
अथ मौलिगतस्येन्दोर्विशदैर्दशनांशुभि ।
उपचिन्वन् प्रभा तन्वी प्रत्याह परमेश्वर ॥ २५ ॥
विदित वो यथा स्वार्था न मे काश्चित् प्रवृत्तय ।
ननु मूर्तिभिरष्टाभिरित्थभूतोऽस्मि सूचित ॥ २६ ॥
सोऽह तृष्णातुरैर्वृष्टि विद्युत्वानिव चातकै ।
अरिविप्रकृतैर्देवै प्रसूति प्रति याचित ॥ २७ ॥
अत आहर्तुमिच्छामि पार्वतीमात्मजन्मने ।
उत्पत्तये हविर्भोक्तुर्यजमान इवारणिम् ॥ २८ ॥
तामस्मदर्थे युष्माभिर्याचितव्यो हिमालय ।
विक्रियायै न कल्पन्ते सबन्धा सदनुष्ठिता ॥ २९ ॥
उन्नतेन स्थितिमता धुरमुद्वहता भुव ।
तेन योजितसबन्ध वित्त मामप्यवञ्चितम् ॥ ३० ॥
एव वाच्य स कन्यार्थमिति वो नोपदिश्यते ।
भवत्प्रणीतमाचारमामनन्ति हि साधव ॥ ३१ ॥
आर्याप्यरुन्धती तत्र व्यापार कर्तुमर्हति ।
प्रायेणैवविधे कार्ये पुरन्ध्रीणा प्रगल्भता ॥ ३२ ॥
त प्रयातौषधिप्रस्थ सिद्धये हिमवत्पुरम् ।
महाकोशीप्रपातेऽस्मिन् सगम पुनरेव न ॥ ३३ ॥

25 c H 1 विस्तारयन् प्रभा
26 a H-4 स्वार्थं न— c P-4 न तु नू—
28 c I-5, I-8 उत्पादाय but even here Mallinātha follows उत्पत्तये, F reads with उत्पादाय हविर्भोक्तुर्यज—
29 a H-4—मत्स्वार्थं
31 d F —मनन्तीह मानव-
33 c and d F महाकालीप्रपातेऽस्मिन् सगम पुनरस्तु न, Va-3 महाकार्णप्रपातेऽस्मिन् , I-8 महाकोशीप्रपात—with Mallinātha, Bṛhaspati and Bharata—कोशी—but Gopāla—काशी—

तस्मिन् सयमिनामाद्ये जाते परिणयोन्मुखे ।
जहु परिग्रहव्रीडा प्राजापत्यास्तपस्विन ॥ ३४ ॥
तत परममित्युक्त्वा प्रतस्थे मुनिमण्डलम् ।
भगवानपि सप्राप्त प्रथमोद्दिष्टमास्पदम् ॥ ३५ ॥
तेऽप्याकाशमसिश्यामम् उत्पत्य परमर्षय ।
आसेदुरोषधिप्रस्थ मनसा सह मानसा ॥ ३६ ॥
अलकामतिवाह्येव वसति वसुसपदाम् ।
स्वर्गाभिष्यन्दवमन कृत्वेवोपनिवेशितम् ॥ ३७ ॥

34 *b* Va 3 I 1—णयोत्सुके *c* Vā 1 जह्नु *d* So Vā 1 G, I 5 Bh others तपोधना

35 *a* I 1, I 3 तत प्रयाम इत्युक्त्वा, I 5 तत परममोमित्यु—clearly a combination of परममित्युक्त्वा and परममोमुक्त्वा the intended reading, H 1 तत प्रमाणमित्युक्त्वा, I 8 agrees with ours, but even here Mallinatha reads तत प्रयाम इ— c So I 8, others सप्राप्त *d*—ष्टमाश्रमम् Vā 1 P 3 P 4 I 1, I 2, I 3, H 1 which corrects आस्पद into आश्रमम्, I 8 reads आस्पदम् but even here Brhaspati and Bharata accept आश्रमम्, P 5—ष्टमासनम्

36 *a* So Vā 1, P 2, P 3, B 1, I 8 (where Mallinātha explains ते चाकाश—" महर्षयश्चापि," चकार समुच्चयार्थं ), but Bharata (अपि पूर्वापेक्षया समुच्चये) and Gopāla (तेऽपि परमर्षयोऽपि) read तेऽपि, F G Bh ते चाकाश—, Vā 3, P 5 ते आकाश— *b* I 8 उपेत्य परमर्षय but strangely Mallinatha, Brhaspati, Bharata and Gopāla follow उत्पत्य, I 1, I 3 उद्यम्य प— *c* F आजग्मुरो— *d* So P-5 alone with comment मनसा निर्मिता मानसा सप्तर्षय मनसा सह मन इवाति-चातुर्योक्ति यदैव गमनाय मन धृत तदैव प्रापु , I 1, I 3, I 8 मनसा तुल्यरहस in Brhaspati, Bharata and Gopāla, even here Mallinātha समरहस , Vā-3 मनसा सहरहस but comments मनसा समरहस

37 *a* So Vā 1, F, P-4, P 2 P 3, I 1 B 1 —मतिवाह्यैव Bh P 5 (but comment—ह्यव), I 1, I 8 (where Mallinātha explains

गङ्गास्रोत परिक्षिप्त वप्रान्तर्ज्वलितौषधि ।
बृहन्मणिशिलासाल गुप्तावपि मनोहरम् ॥ ३८ ॥
जितसिंहभया नागा यत्राश्वा बिलयोनय ।
यक्षा किंपुरुषा पौरा योषितो वनदेवता ॥ ३९ ॥
शिखरासक्तमेघाना व्यज्यन्ते यत्र वेश्मनाम् ।
अनुगर्जितसंदिग्धा करणैर्मुरजस्वना ॥ ४० ॥

जनिवाह्येव), but Bharata and Gopāla जनिवाह्येव अनिक्रम्यैव, Vā-3—ह्येव c So Vā 1, P 5 (comment मारायय विवायैव रचितम्), P 2, F, Mallinātha in I 8 (=अभिष्यन्दाऽतिरेक जनिरिक्तजन इति यावत्) but Bṛhaspati, Bharata and Gopāla explain अभिष्यन्दि (वमन त्यक्त्वार वा कृत्वा, स्वर्गस्य अभिष्यन्दि-वमन शाखानगरमिव कृत्वा, स्वांशुम् स्यन्दिनु शीत यस्य स तया अथवा स्थानात् स्थानान्तरगर्पणमभिष्यन्दिवमनशब्देनोच्यते), cp also comment on 47 d So Bh, F P-5 supported by Rv XV, 29d H 1 कृत्वा इव निव—, others—व विनि—

38 a and b F—परि त्यवप्रान्त—, Vā 1, P 2, P 3, I-5, I 8 गङ्गाश्रात — c So P 5, G, Bh, others शिलासार d So F, P-5, G, S, T and I 8 (Mallinātha गुप्तावपि सवरणेऽपि, Bharata परचम्रावार दुर्रचना गुप्ति तस्या recording स्वर्गादपि as a variant), Vā 1, I 1, I-3, I 8 स्वर्गादपि मनोहरम्, P-3 स्वर्गादपि मनोरमम्

39 a I 8 वीतसिंहभया—, but the four commentators explain जितसिंह—, Mallinātha recording वीतवीतभया नागा (वीत वीतान् पादाङ्कुशमंस्या भय येषा त) as a variant b Mark Mallinātha on बिल citing a quotation where बिल does not occur, bila = Uccaiḥśravas ? Cp however

वामकांस्य विवरात् कृष्णस्य परमात्मन ।
गण स्वयनुरगाणामाविर्भूतो मनोहर ॥
*Brahmavaivarta I, 5, 49*

40 b वीज्यन्ते I 2, वेश्मसु P 2 c Vā-1, P 3, I 1, I 2 मन्द्रगर्जित—, Bh, F, P 2, P-4, P-5, I 8 अनुगर्जित according to Mallinātha but अन्तर्जित according to Bṛhaspati, Bharata and

यत्र कल्पद्रुमैरेव विलोलविटपांशुकै ।
गृहयन्त्रपताकाश्रीरपौरादरनिर्मिता ॥ ४१ ॥
यत्र स्फटिकहर्म्येषु नक्त सोपानपङ्क्तिषु ।
ज्योतिषां प्रतिबिम्बानि प्राप्नुवन्त्युपहारताम् ॥ ४२ ॥
यत्रौषधिप्रकाशेन नक्त दर्शितसंचरा ।
अनभिज्ञास्तमिस्राणां दुर्दिनेष्वभिसारिका ॥ ४३ ॥
यौवनान्त वयो यस्मिन्नातङ्क कुसुमायुध ।
रति स्वेदसमुत्थान निद्रा संज्ञाविपर्यय ॥ ४४ ॥

Gopāla d—मुरज—F, I 8, Vā 3, P-2, I 1, I 3, I 5, —मरुज—Va 1, I 2,—मुरुज—P 3, P 5

41 c—पताकश्री—F, गृहच्छत्रपताकाश्री—I 8 followed by Brhaspatı, Bharata and Gopāla

42 a I 8—हर्म्याणा but all the commentators explain—हर्म्येषु, but Bharata rerords it b So Va 1, P 3, P 4, I 2, I 5, I 8 with Mallınātha, Brhaspatı, Bharata and Gopāla none recording any variant, I 1, I 3 Va 3 सोपानभूमिषु (but comment—आपानभूमिषु), Va 1 records, on margin नक्तमापानभूमिषु as a variant which is followed by P 5, F, Bh, P 2, S, T, G B 2 (curiously Mallınātha in them explains आपानभूमिषु आपानपङ्क्तिषु?) d I 1, I 3—उपकारताम्

44 b F, Bh नान्तक कुसुमायुधात् followed by G, S, T, P 5 आतङ्क कुसुमायुध (comment यत्र सायकक्षेपा मदन एवातङ्क न तु व्याध्यादि—, may be न+आतङ्क no fear of death from over indulgence) cp नैषा शिश्न प्र दहति जातवेदा AV IV, 34 2, Vā 1 H-4 अन्तर कुसुमायुध (see Mallınātha), I 8 नानङ्ग कुसुमायुध followed by Bṛhaspatı, Bharata and Gopāla Cp Md II, 4b

c and d cp Rv VIII 51, I 1, Vā 1, H 4, B 1, B 2 रतिखेदसमुत्थान्ता, F, Bh रतिखेदसमुत्था recording रतिभेदसमु— as a variant meaning 'sleep caused by a variety of (sexual) enjoyment', I 5 रति खेदसमुत्थान accepted by I 8

भ्रूभेदिभिः सकम्पोष्ठैर्ललिताङ्गुलितर्जनैः ।
यत्र कोपैः कृताः स्त्रीणामाप्रसादार्थिनः प्रियाः ॥ ४५ ॥
सतानकतरुच्छायासुप्तविद्याधराध्वगम् ।
यस्य चोपवनं बाह्यं सुगन्धिर्गन्धमादनः ॥ ४६ ॥
तत् कान्तमृषयो दिव्याः प्रेक्ष्य हैमवतं पुरम् ।
स्वर्गाभिसंधिसुकृतं वञ्चनामिव मेनिरे ॥ ४७ ॥
ते सद्मनि गिरेर्वेगादुन्मुखद्वाःस्थवीक्षिताः ।
अवतेरुर्जटाभारैर्लिखितानलनिश्चलैः ॥ ४८ ॥

and followed by Bṛhaspati, Bharata and Gopala explaining आयासवारणं रतिरेव नान्यत् किमपि The sense is the gods get perspiration only in *rati*, otherwise they never have it *d* F records सुप्ति सन्ना—in footnotes

45 *a* Vā-1 भ्रूभङ्गिभि (perhaps from comment भ्रूभेदिभि भ्रूभङ्गवद्भि) *d* Vā 3 प्रसादप्रार्थिन प्रिया, P-5 अप्रसादार्थिन प्रिया Note सकम्पोष्ठै in all the MSS for which cp I, 45

46 Śloka omitted by I 2, I-8 *d* So F, P-4, P-5, G, S, T —मादनम्, B 1, Vā 1, P 2, P-3, I 1, I-3, I-5 सुगन्धिरा—, Bh., Vā-3 गन्धवद् गन्धमादनम् with comment गन्धवद् गन्धाढ्य गन्धमादन नाम गिरिर्यस्य पुरस्य बहिर्भव बाह्यमुपवनम् । गन्धवद् गन्धमादनमित्यागन्तुक पाठ । प्राचीनन्तु सुगन्धिर्गन्धमादन इति पुल्लिङ्गान्त

47 *a* So Vā-1, B 1, H-4, I-5, अथ त मुनयो दिव्या Bh., F, G, S, T, Vā-3, I 2, I-3, I-8, rest as ours, P-5 अथ त मुनय सर्वे, P-4 ततस्त मुनय सर्वे, Va-3 ततस्त मुनयो दिव्या (but in comment अथ दिविभवा दिव्या मुनय) *c* So Vā-1, F, Bh, G, S, T, Vā-3, I 2, I-3, I-8, I 1, I-3, P-5, H-4 स्वर्गाभिष्यन्दसुकृत but in comment स्वर्गमभिसंधायार्जितस्य सुकृतम् उपवञ्चनामिव मनिरे which implies स्वर्गाभिसंधिसुकृत, P-4, I-5 स्वर्गाभिस्यन्दि सुकृत, noted by I-8 and followed by Br, Bhar —स्यन्दि = स्वर्गप्रसवि

48 *b* F—मुखद्वास्थवी—noting—मुखद्वारस्थवीक्षिता *d* H-4—नलसन्निभै

गगनादवतीर्णा सा यथावृद्धपुर सरा ।
तोयान्तर्भास्करालीव रेजे मुनिपरपरा ।। ४९ ।।
तानर्घ्यानर्घ्यमादाय दूरात् प्रत्युद्ययौ गिरि ।
नमयन् सारगुरुभि पादन्यासैर्वसुधराम् ।। ५० ।।
धातुताम्राधर प्राशुर्देवदारुबृहद्भुज ।
प्रकृत्यैव शिलोरस्क सुव्यक्तो हिमवानिति ।। ५१ ।।
विधिप्रयुक्तसत्कारै स्वय मार्गस्य देशक ।
स तैरात्रमयामास शुद्धान्त शुद्धवर्त्मभि ।। ५२ ।।
तत्र वेत्रासनासीनान् नीचासनपरिग्रह ।
इत्युवाचेश्वरान् वाच प्राञ्जलि पृथिवीधर ।। ५३ ।।
अपमेघोदय वर्षमदृष्टकुसुम फलम् ।
अतर्कितोपपन्न वो दर्शन प्रतिभाति मे ।। ५४ ।।
मूढ बुधमिवात्मान हैमीभूतमिवायसम् ।
भूमेर्दिवमिवारूढ मन्ये भवदनुग्रहात् ।। ५५ ।।

49 Vā-1 reverses the order of 49 50, rest as ours
50 *a* Va-1, P-4, I 1, I 3, I 5, I 8 in Bṛhaspati अर्घमा—, F, Bh., P 5, I 2, G, S, T I 8 in Mallinātha, Bharata and Gopāla अर्घ्यं— *b* P-4, P 5 नग for गिरि
51 *d* P-5 हिमवानिव, I 5, I 8 हिमवान् गिरि
52 *a* B 2—त्नमस्कारै *b* P 5 दैशिक (=उपदेशी), I 1, I 3, I 5, I 8, Bh दर्शक *c* Va 3 स तदात्रमयामास (but comment तैर्मुनिभि), F, P 5 स तैरात्रामया—(but comment आत्रमयामास निनाय), cp 79 *d* So P 5, others शुद्धकर्मभि
53 *b* So Vā-1, P 2, P 3, P-4, I 2, B 1, B 2, कृत्तासनपरि—Vā 3, P 5, F, I 1, I 3, I 5, I 8, H-4, Bh, G, S, T *c* Vā-1 प्रत्युवाचे—, H-4 प्रत्युवाच मुनीन् सर्वान्, I 1 इत्युवाच ऋषीन् सर्वान्, I 5 इत्युवाच मुनीन् सम्यक् *d* Bh., F भूधरेश्वर.
55 *a* So Va-1, I 8 (with four commentators), P-4, I 1, I 2, I 3, I 5, B 1, B 2, note Mallinātha बुधम् in I 8, but बुद्धम्

अद्य प्रभृति भूतानामधिगम्योऽस्मि शुद्धये ।
यदध्यासितमर्हद्भिस्तद्धि तीर्थं प्रचक्षते ॥ ५६ ॥
अवैमि पूतमात्मानं द्वयेनैव द्विजोत्तमाः ।
मूर्ध्नि गङ्गाप्रपातेन धौतपादाम्भसा च वः ॥ ५७ ॥
जङ्गमं प्रैष्यभावेन स्थावरं चरणाङ्कितम् ।
विभक्तानुग्रहं मन्ये द्विरूपमपि मे वपुः ॥ ५८ ॥
भवत्सम्भावनोत्थाय परितोषाय मूर्छते ।
अभिव्याप्तदिगन्तानि नाङ्गानि प्रभवन्ति मे ॥ ५९ ॥
न केवलं दरीसंस्थं भास्वतां दर्शनेन वः ।
अन्तर्गतमपास्तं मे रजसोऽपि परं तमः ॥ ६० ॥
कर्तव्यं वो न पश्यामि स्याच्चेत् किं नोपदिश्यते ।
मन्ये मत्पावनायैव प्रस्थानं भवतामिह ॥ ६१ ॥

in G, S, T, Bh. *b* P-3, I-3 हैमीभूत—and so is Gopāla in I-8. *d* P-5—भवदनुग्रहम्

56. *b* P-2, I-5, Bh. अपि—, note अथ प्रभृत्यहमिवास्मि यादोरसै-रितालेव: Br. I, 16, —स्मि सिद्धये I-2, P-5 *d* I-5 तीर्थं प्रचक्ष्यते

57. *c* P-5—प्रवाहेन. *d* धूतपादा—I-2

58. *a* So F., I-8 with four commentators, Vā-1 प्रैष्यभावेन, Bh. प्रैष्यभावे वः, H-4 प्रेष्यत्वे वः, P-5 प्रैष्यत्वे वः. *b* I-8 notes —द्विरूपं: followed by Gop *c* and *d*. So Vā-1, P-3, P-4, I-1, I-8 in Bṛhaspati, Bharata and Gopāla, P-5—ग्रह तद्धि द्वैरूप्यमिति मे वपुः I-5 विभक्तानुग्रहं मन्ये द्वैरूप्यमपि मे वपुः, G, S., T. विभक्तानुग्रहं मन्ये द्विरूपमपि , so Mallinātha in I-8

59. *c* So Vā-3, P-4, B-1, Vā-3 अभिव्याप्त—(but comment: अपि व्याप्त—); P-5, I-1, I-5, I-8, F, Bh., G, S., T अपि व्याप्त—, P-2 अपि व्याप्त—with अभिव्या—on top of line. After this Vā-3 reads कर्तव्यं वा न पश्यामि. (61)

60. *c* Vā-3—अन्तर्गतमपि ध्वस्तं रज—.

61. *b* F.—किं नोपपद्यते. *c* Vā-1, B-2, H-4 मन्ये मत्पा—. *d* Vā-3 —भवतामितः; so P-3, P-5

तथापि तावत् कस्मिंश्चिदाज्ञा मे दातुमर्हथ ।
विनियोगप्रसादा हि किंकराः प्रभविष्णुषु ॥ ६२ ॥
एते वयममी दाराः कन्येयं कुलजीवितम् ।
ब्रूत येनार्थिनो यूयमनास्था बाह्यवस्तुषु ॥ ६३ ॥
इत्युक्तवांस्तमेवार्थं दरीमुखविसर्पिणा ।
द्विरिव प्रतिशब्देन व्याजहार हिमाचलः ॥ ६४ ॥
अथाङ्गिरसमग्रण्यमुदाहरणवस्तुषु ।
ऋषयः प्रेरयामासुः प्रत्युवाच स भूधरम् ॥ ६५ ॥
उपपन्नमिदं सर्वमतः परमपि त्वयि ।
मनसः शिखराणां च सदृशी ते समुन्नतिः ॥ ६६ ॥
स्थाने त्वां स्थावरात्मानं विष्णुमाहुस्तथा हि ते ।
चराचराणां भूतानां कुक्षिराधारतां गतः ॥ ६७ ॥
गामधास्यत् कथं नागो मृणालमृदुभिः फणैः ।
आरसातलमूलात् त्वमवालम्बिष्यथा न चेत् ॥ ६८ ॥
अच्छिन्नामलसंतानाः समुद्रोर्म्यनिवारिताः ।
पुनन्ति लोकान् पुण्यत्वात् कीर्तयः सरितश्च ते ॥ ६९ ॥

63 *b* I-5, I 8 ब्रूत भूयात, followed by Br, Bhar, Gop *c* So I-8 noting येनार्थिना यूय, others यनात्र व कार्य—

64 F with others ऊचिवान्, P-4 इत्युदारितवार्थं *b* गुहामुख— Bh., G, S T *c* P-5 द्विरिव *d* Va 3 and Bh with others हिमालय

65 *c* F, Bh ऋषयस्तावदासामासु, mark F's preference for तावदामासु

66 B-1 इतः परमपि—

67 *a* I-5 स्थावराणां तु

68 *a* F आधास्यत् *b* Vā-1, H 3, B 1, B-2, I 8—मृदूनै. *c* P 2, P 3—मूलात्त्व त्वमा—, I 8, Vā-3—मू॰ त्वमवा—, so F, Va-1—लात्त्वमवालम्बि—

69 Vā-1 reads this śloka after 71 *a* H-4 अच्छिन्नमूलसन्ताना with comment न छिन्नं छेदं प्राप्तं मूलस्य सन्तानं विस्तारं यासां

यथैव श्लाघ्यते गङ्गा पादेन परमेष्ठिन ।
प्रभवेन द्वितीयेन तथैवोच्छिरसा त्वया ॥ ७० ॥
तिर्यगूर्ध्वमधस्ताच्च व्यापको महिमा हरे ।
त्रिविक्रमोद्यतस्यासीत् स तु स्वाभाविकस्तव ॥ ७१ ॥
यज्ञभागभुजां मध्ये पदमाक्रम्य तस्थुषा ।
उच्चैर्हिरण्मय शृङ्ग सुमेरोर्वितथीकृतम् ॥ ७२ ॥
काठिन्य स्थावरे काये भवता सर्वमर्पितम् ।
इद तु ते भक्तिनम्रमहैदारावन वपु ॥ ७३ ॥
तदागमनकार्यं न शृणु कार्यं तवैव तत् ।
श्रेयसामुपदेशात्तु वयमप्यशभागिन ॥ ७४ ॥

ता   *b* So F, Bh., Vā-3 (—र्मिनि— परामलादल:प्रवेशाच्च), S, T, G, but Vā-I, P-4, I 1, I 2, I-3, H-3, P-5, I-5, I-8, B-1, B 2—र्मिनिवा—; but Kālidāsa describes fame as crossing oceans in Rv VI, 77 —आम्भोनिधीनुदधीन् विलोर्णं भुजामाना वनति प्रतिष्ठम् etc, and we should adopt—र्मिनि— here accordingly, cp XV, 8 where also Vā-2 reads—निर्वि-वारितक्रम, while other MSS have—ध्वनि—   *c* Vā-I लाक

70   *c* So Vā I, H-3, B-1, H-4, P-2, P-3, P-4, P-5, I 2, I-3, I-5, I-8, Bh. प्रभवेन, G, S, T प्रनवेण, so Bharata in I-8.

71   *d* P-3, I-1 स च स्वाभा—, H-3, H-4 स तु स्वाभाविको हरे:

72.   *a* So F, others with Bh. पदमातस्थुषा त्वया   *d* Vā-3—विफलीकृतम् but in comm.—वितथी—

73   *c* and *d* So F Bh इद तु ते भक्तिनम्र सतामाराधन वपु, Vā-I—नम्र महदा—, P-5 इद तु ते भक्तिनम्रमुदाराधन वपु, B-1 इद ते भक्तिनम्रस्य सतामागधन वपु (=P-2 except in—माराधक—), I-I, H-3, I-8 इद ते भक्तिनम्रस्य महोदारस्य वपु followed by Brhaspati, Bharata and Gopāla, G, S, T इद तु ते भक्तिनम्र सतामाराधन वपु

74.   *a* So F., Vā-1, I-8 यशा—   *b* F तवैव च   *c* So F, others —शाच्च   *d* So Vā-1, P-5, F, P 2, Bh, I-5, I-8—मनन—.

अणिमादिगुणोपेतमस्पृष्टपुरुषान्तरम् ।
शब्दमीश्वर इत्युच्चैः सार्धचन्द्र बिभर्ति य ॥ ७५ ॥
कल्पितान्योन्यसामर्थ्यै पृथिव्यादिभिरात्मभि ।
यस्येद ध्रियते विश्व धुर्यैर्यानमिवाध्वनि ॥ ७६ ॥
योगिनो य विचिन्वन्ति क्षेत्राभ्यन्तरवर्तिनम् ।
अनावृत्तिभय यस्य पदमाहुर्मनीषिण ॥ ७७ ॥
स ते दुहितर साक्षात् साक्षी विश्वस्य कर्मण ।
वृणुते वरद शभुरस्मत्सक्रामितै पदै ॥ ७८ ॥
तमर्थमिव भारत्या सुतया योक्तुमर्हसि ।
अशोच्या हि पितु कन्या सद्भर्त्रे प्रतिपादिता ॥ ७९ ॥

75 *a*—गुणस्थान—I 5, I 8, with गुणोपेत on margin which is the reading followed by Mallinatha and Bharata, Brhaspati prefers—गुणैर्व्याप्त—, P 4, I 2, H 4—गुणोत्थान—, I 3 अणिमादिगुणैस्वयंमस्पष्टपुरु— *c* So Va 1, F, I 5 शब्दमीश्वरमित्यु—which is accepted by I 8 in Bharata, Brhaspati and Gopāla, Bharata recording अत्युच्चै as a variant

76 *a* G, S, T (with कलितान्योन्य—explained by Mallinātha as कलित धृतिसग्रहादिस्वस्वगुणसपादितम् अन्योन्यसामर्थ्यं यै) *b* I 1, I 2—रात्मनि *c* So F, I 8 Bh, Vā 1 येनेद, P 2, I 1, I-3 येनेद धार्यते व्यक्त, P 5 येनेद तन्यते व्यक्त, H-4 येनेद धार्यते विश्व, I 2 यस्येद धार्यते विश्व

77 *a* Vā 1 निचि, for which cp निचेता (=observer) RV I, 184, 2,

78 *b* F, Bh कर्मणाम् *d* So Vā 1, F, T, G, S, Bh, cp 52 स तैरात्मयामास, Va 3 सक्रमितै (comment अस्मासु निवेशितै), I 1, H 3 (comment अस्माभि सक्रमितानि कथितानि तै), H-4, I 8 in Mallinātha, Brhaspati and Bharata (but Gopāla सक्रामितै)

79 *d* Vā 1 सद्भर्तुं, Bh, G सद्भर्तुं—

यावन्त्येतानि भूतानि स्थावराणि चराणि च ।
मातरं कल्पयन्त्वेनामीशो हि जगत पिता ॥ ८० ॥
प्रणम्य शितिकण्ठाय विबुधास्तदनन्तरम् ।
चरणौ रञ्जयन्त्वस्याश्चूडामणिमरीचिभि ॥ ८१ ॥
उमा वधूर्भवान् दाता याचितार इमे वयम् ।
वर शम्भुरल ह्येष त्वत्कुलाभ्युदय विधि ॥ ८२ ॥
अस्तोतु स्तूयमानस्य वन्द्यस्यानन्यवन्दिन ।
सुतासम्बन्धविधिना भव विश्वगुरोर्गुर ॥ ८३ ॥
एववादिनि देवर्षौ पार्श्वे पितुरधोमुखी ।
लीलाकमलपत्राणि गणयामास पार्वती ॥ ८४ ॥
शैल सपूर्णकामोऽपि मेनामुखमुदैक्षत ।
प्रायेण गृहिणीनेत्रा कन्यार्थेषु कुटुम्बिन ॥ ८५ ॥
मेने मेनापि तत्सर्वं पत्यु कार्यं समीप्सितम् ।
भवन्त्यव्यभिचारिण्यो भर्तुरिष्टे पतिव्रता ॥ ८६ ॥
इदमत्रोत्तर न्याय्यमिति बुद्ध्या विमृश्य स ।
आददे वचसामन्ते मङ्गलालङ्कृता सुताम् ॥ ८७ ॥

80 *a* P-5 यावन्मयानि, F records यावद्द्वयानि, यानि द्वयानि *b* F records चराणि स्थावराणि च *d* P 2 corrects जगत into जगता
81 *c* Bh अस्या चूडा—
82 *d* So F , others—एष त्वत्कुल—
85 *a* I-8 शैलस्तु पूर्णकामोऽपि in Brhaspati, Bharata and Gopala *b* F , Va-3, P-5, I-3, H 3, H-4—मुखमवैक्षत *c* I-8 गृहिणीतन्त्रा , I 1 गृहिणीमुख्या *d* So F , G , S , T , Bh with Mal and Br in I 8 , others कन्यार्थे हि—
86 Sloka omitted by F , P-5, I-5 *a* मेनापि मेने तत्सर्वं Va-3, B-1, B 2 मने मेनापि तत्सानु *b* Va-3 कार्यं समीक्षितम्, P 3 समीहितम् G , Bh.—र्यमभीप्सितम् *c* So I-5 , I 1, I 3 न भव-न्त्यभि— *d* B 1 भवन्त्यव्यभिचारिण्योऽभर्तृष्वेव पतिव्रता
87 Omitted by H 3 *a* I 1 इदमेवोत्तर न्याय्य—, B 1 इदमवोत्तर *b* Va 3 विचार्य, P-4, P-5, I 1 विचिन्त्य

एहि सर्वात्मना वत्से भिक्षा त्व परिकल्पिता ।
अर्थिनो मुनय प्राप्त गृहमेधिफल मया ॥ ८८ ॥
एतावदुक्त्वा तनया मुनीनाह महीधर ।
इय नमति व सर्वास्त्रिलोचनवधूरिति ॥ ८९ ॥
ईप्सितार्थक्रियोदार तेऽभिनन्द्य गिरेर्वच ।
आशीर्भिरेधयामासु पुर पाकाभिरम्बिकाम् ॥ ९० ॥
ता प्रणामादरस्रस्तजाम्बूनदवतसकाम् ।
अङ्कमारोपयामास लज्जमानामरुन्धती ॥ ९१ ॥
तन्मातर चाश्रुमुखी दुहितृस्नेहविक्लवाम् ।
वरस्यानन्यपूर्वस्य विशोकामकरोद् गुणै ॥ ९२ ॥
वैवाहिकी तिथि पृष्टास्तत्क्षण हरबन्धुना ।
ते त्र्यहादूर्ध्वमाख्याय चेरुश्चीरपरिग्रहा ॥ ९३ ॥
ते हिमाचलमामन्त्र्य पुन प्रेक्ष्य च शूलिनम् ।
सिद्ध चास्मै निवेद्यार्थ तद्विसृष्टा खमुद्ययु ॥ ९४ ॥

88 *a* Bh , F एहि विश्वात्मने, Va 3 (comment) , I 1, I 3 शर्वात्मने, so G , I 2, P 2, I 5 सर्वार्पणे, H 3, H 4, B 1, B 2 सर्वात्मने , I 8 सर्वात्मना in Brhaspati Bharata and Gopāla explaining सर्वेषामात्मस्वरूपेण शिवेन recording विश्वात्मने, सर्वात्मने as variants , Vā 1 शर्वार्पणे, cp 29 and 78 *b* Bh , G भिक्षासि

89 *b* Bh मृषीनाह महीधर , स भूधर P 5 *d* I 8—वधूरियम्

90 *c* H 3—भिर्वर्धयामासु

91 *a* P 2—दरश्वस्त— *b* P-4—तसिकाम्, so I 8 in Mallinātha and Gopāla clear, in Bharata and Brhaspati doubtful, note Mallinatha वतसकाम् in G , T , S

92 *b* Vā-1 दहितु स्नेह—, I 5 दुहितु स्नेहव्याकुलाम्, H 3—नृस्नेहविह्वलाम्, I 8 दुहितृस्नेहव्याकुलाम् *c* H-4 वरस्य नान्यपूर्व—

93 *a* Vā 1, I 3 पृष्टा *d* So I 5, I 8, H 1, G , Bh , I 1 with others चेलुश्चीरप—

94 *a* I 5, Vā 3, P 4, P 5, I 1, I 2, I 3, Bh हिमालयमा— *b* B 1 पुनर्दृष्ट्वा, Bh , G पुन प्राप्य *c* F , Bh सिद्ध तस्मै, I 8 records प्रिय चास्मै as variant

पशुपतिरपि तान्यहानि कृच्छ्राद्
अगमयदद्रिसुतासमागमोत्कः ।
कमपरमवशं न विप्रकुर्युर्
विभुमपि तं यदमी स्पृशन्ति भावाः ॥ ९५ ॥

इति श्रीकुमारसम्भवे महाकाव्ये कविकालिदासकृतौ गौरीयाचनं नाम षष्ठः सर्गः ॥
शुभं भवतु ॥

95 *a* P-3 कृत्स्नाद् *b* P-4 अगणयद्, H-4—समागमेप्सु

Colophon varies Va-3 इति श्रीकुमारसम्भवे काव्ये कालिदासकृतौ षष्ठः सर्गः, P-3 इति श्रीकुमारसम्भवे महाकाव्ये कालिदासकृतौ उमाप्रदानो नाम षष्ठमः सर्गः, so I 2, I 3, I-5 (omitting कालिदासकृतौ), H-3 इति श्रीकुमारसम्भवे महाकाव्ये कालिदासकृतौ गौरीयाचनो नाम षष्ठः सर्गः, so H-4, B 1 उमावरदानो नाम—, I 1—उमाप्रदानो , P-5 इति श्रीकुमारसम्भवे महाकाव्ये सटीके षष्ठः सर्गः, F इति श्रीकालिदासस्य कृतौ कुमारसम्भवे महाकाव्ये षष्ठः सर्गः, G, Bh. उमाप्रदानो =S

## ॥ सप्तमः सर्गः ॥

अथौषधीनामधिपस्य वृद्धौ
तिथौ च जामित्रगुणान्वितायाम् ।
समेतबन्धुर्हिमवान् सुताया
विवाहदीक्षाविधिमन्वतिष्ठत् ॥ १ ॥
वैवाहिकैः कौतुकसंविधानैर्
गृहे गृहे व्यग्रपुरन्ध्रिवर्गम् ।
आसीत्पुरं सानुमतोऽनुरागाद्
अन्तःपुरं चैककुलोपमेयम् ॥ २ ॥
सन्तानकाकीर्णचतुष्पथं तच्
चीनांशुकैः कल्पितकेतुमालम् ।
भासा ज्वलत्काञ्चनतोरणानां
स्थानान्तरं स्वर्ग इवावभासे ॥ ३ ॥
एकैव सत्यामपि पुत्रपङ्क्तौ
चिरस्य दृष्टेव मृतोत्थितेव ।
उपोढपाणिग्रहणेति पित्रोर्
उमा विशेषोच्छ्वसितं बभूव ॥ ४ ॥

1 *b* I 8 यामित्र—

2 *a* I 5, I 8 कौतुकसंनिधानैः according to Bharata and Gopāla, Mallinatha संविधाभिः (?), Bṛhaspati संविधानैः, cp संनिहितेऽपि 13 *b* P 5 दिने दिने *c* P 4 सानुमतोऽनुरोधात्

3 *a* Bh., F P 4, P 5, I 5, G, S T, Va 3—कीर्णमहापथ—, P 3—चतु पथ—, I 8 text चतुष्पथ—but all the commentators महापथ *c* So Va 1 and I 8 with all commentators, but G S, T (with Bh, F, P 5) भासोज्ज्वलन्त्—with Mallinātha explaining उज्ज्वलन्त् in these *d* Va 1 स्वर्गमिवा—

4 *a* So F alone, others एकैव *b* I 8, I 3 P 4 चिराय, I 1, I 2 चिरेण, Bṛhaspati, Bharata and Gopāla—दृष्टेरमृतोत्थितेव in

अह्वाय्यावङ्कमुदीरिताशी
सा मण्डनान्मण्डनमन्वभुङ्क्त ।
सवन्वभिन्नोऽपि गिरे कुलस्य
स्नेहस्तदेकायतन जगाम ॥ ५ ॥
मैत्रे मूहूर्ते शशलाञ्छनेन
योग गतासूत्तरफल्गुनीषु ।
तस्या शरीरे प्रतिकर्म चक्रुर्
बन्धुस्त्रियो या पतिपुत्रवत्य ॥ ६ ॥
सा गौरसिद्धार्थनिवेशवद्भिर्
दूर्वाप्रवालै प्रतिभिन्नरागम् ।
निर्नाभिकौशेयमुपात्तवाणम्
अभ्यङ्गनेपथ्यमलचकार ॥ ७ ॥
बभौ च सपर्कमुपेत्य वाला
विवाहदीक्षाविधिसायकेन ।

I 8 *c* So F उपात्तपाणिग्रहणेव in Va 1, I-5, Vā-3, I 1, I 3 आसन्नपाणिग्रहणेव, आसन्नपाणिग्रहणानि Bh *d* F, I 8 (text alone)—च्छसिना—, P-3—पोत्स्व—

5 *b* P 5 अन्वयुङ्क्त alone, others अन्वभुङ्क्त *c* Bh., S —न्यि—, cp Rv III, 24, H-4 गिरेष्कुलस्य *d*—तन बभूव Va-1

6 *a* H-3, H-4—शशलाञ्छनोत्य (comment —लाञ्छनस्य चन्द्रस्यात्य उदया यस्मिन्) *b* So F, P-5, I 1, I 2, I-3, I 8, Va-1, H 3, B 1—फा—

7 *b* Bh, G प्रतिभिन्नशोभम् *c* So Vā 1, I 1, I 2, I-3, I-8, G, S, T, Bh, Va-3 उन्नाभि (comment उत्क्रान्तनाभि), so F, H-3 निर्धौतकौ—, so H-4, P-5 निर्भिन्नकौशय—(comment नाभि-कौशेय जघनाम्बर यत्र नदादि (?) तदपास्यते घटिकानाशे), mark confusion of नाभि (in comment) and निर्भिन्न (of the text), cp उन्नाभ in Rv XVIII, 20, Va-3—यमुनोद्वाणम्

करेण भानोर्बहुलावसाने
सधुक्ष्यमाणेव शशाङ्कलेखा ॥ ८ ॥
ता रोध्रकल्केन हृताङ्गतैलाम्
आश्यानकालेयकृताङ्गरागाम् ।
वासो वसानामभिषेकयोग्यम्
नार्यश्चतुष्काभिमुखीमनैषु ॥ ९ ॥
विन्यस्तवैडूर्यशिलातलेऽस्मिन्
आविद्धमुक्ताफलभक्तिचित्रे ।
आवर्जिताष्टापदकुम्भतोयैः
सतूर्यमेना स्नपयाबभूवु ॥ १० ॥
सा मङ्गलस्नानविशुद्धगात्री
गृहीतपत्युद्गमनीयवस्त्रा ।
निवृत्तपर्जन्यजलाभिषेका
प्रफुल्लकाशा वसुधेव रेजे ॥ ११ ॥

८ *b* So F, H 3, Bh, Vā 1, Va 3, P 5, I 3, I 8 नवेन दीक्षा— (I 8 शाय—), cp 24*d* *d* Va 3, P 5, I 3, I 5—क्षमा—, F सघुक्षमाणेव शशाकरेखा, Bh —धुक्ष्यमाणेव शशाङ्करेखा

9 *a* I 5, Vā 3, Bh, I 1, I 3, I 8 लोध्र (—कल्केन कृताङ्गतैलाम्), P 4—न हृताङ्ग— *b* P 5—कालीयरसाङ्गरागाम्, I 8—कालीयकृताङ्गरागाम् *d* P-4—मुखी निपेदु, I 5, I 8, Bh —भिमुख व्यनैषु, so I 3

10 *a* I 5, I 8 विन्यस्तवैडूर्यशिले च तस्मिन्, Bh.—वैडूर्यशिलातलेऽस्मिन् *b* P 5 (विन्यस्तवैडूर्यशिल्पे च तस्मि-) नाविद्धमुक्ता , I 1, I 3, H-4, Bh आबद्धमुक्ता , H 4 आविद्धमुक्ता—, I 8 आरब्धमुक्ता—not followed in comments which have आबद्ध (Mallinātha), आयुक्त—(= बद्ध Bṛhaspati), आरब्ध—(—ग्रथित Bharata) and आवद्ध (Gopāla) *c* तोया P 5

11 *b* Vā 1, I 8 (Bṛhaspati, Bharata and Gopāla)—तत्र—, H-4, P 2 गृहीतशुद्धाद्गमनीयवस्त्रा, H 3 गृहीतशुभ्रोद्गमनीयवस्त्रा, G, Bh. गृहीनपत्युद्गमनीयवस्त्रा, गृहीतवत्युद्गमनीयवस्त्रम् I 1, I 3, F

तस्मात् प्रदेशाच्च वितानवन्त
युक्त मणिस्तम्भचतुष्टयेन ।
पतिव्रताभि परिगृह्य निन्ये
क्लृप्तासन कौतुकवेदिमध्यम् ॥ १२ ॥
ता प्राङ्मुखी तत्र निवेश्य तन्वीं
क्षण व्यलम्बन्त पुरो निषण्णा ।
भूतार्थशोभाह्रियमाणनेत्रा
प्रसाधने सन्निहितेऽपि नार्य ॥ १३ ॥
धूपोष्मणा त्याजितमार्द्रभाव
केशान्तमन्त कुसुम तदीयम् ।
पर्याक्षिपत् काचिदुदारबन्ध
दूर्वावता पाण्डुमधूकदाम्ना ॥ १४ ॥
प्रमक्तशुक्लागुरु चकुरस्या
गोरोचनापत्रविभङ्गमङ्गम् ।
सा चक्रवाकाङ्कितसैकतायास्
त्रिस्रोतस कान्तिमतीत्य तस्थौ ॥ १५ ॥

c So F, Vā-1, I-8 with four commentators निर्वृत्त—Va 3, I 1, I-3, G, S, T, Bh.

12 a तत प्रदशाच्च P-4, P-5 c So all the MSS except Va 1 with प्रतिगृह्य d H-3, H-4 क्लिप्ता (comment क्लिप्त रचित)

13. b Va-1, I-5 विलम्बत—, H 3—यन्त so H-4 c I-8 भूतार्थ शोभाक्रियमाणनेत्रा in Brhaspati, भूतार्थशोभाह्रिय—in Bharata भूतार्थशोभाक्रियमाणनेत्रा in Gopāla but भूतार्थशोभाह्रियमाणनेत्रा in Mallinatha

14 a P-4, P-5 धूपन मत्याजित— c F पर्यक्षिपत् majority (with Bh.) पर्या—, cp note on स्ववाहनेना—38

15 a F विन्यस्तकाल—, so I 1, I 3, H 3 प्रमक्तकाल , H-4 प्रामक्तकाल—, I 8 प्रयुक्तकालागुरु चकुरस्या गोरोच in text

लग्नद्विरेफं परिभूय पद्मं
समेघलेखं शशिनश्च बिम्बम् ।
तदाननश्रीरलकैः प्रसिद्धैश्
चिच्छेद सादृश्यकथाप्रसङ्गम् ॥ १६ ॥

कर्णार्पितो रोध्रकषायरूक्षे
गोरोचनाभेदनितान्तगौरे ।
तस्याः कपोले परभागलाभाद्
बबन्ध चक्षूंषि यवप्ररोहः ॥ १७ ॥

रेखाविभक्तः प्रविभक्तगात्र्याः
किंचिन्मधूच्छिष्टविमृष्टरागः ।
कामप्यभिख्यां स्फुरितैरपुष्यद्
आसन्नलावण्यफलोऽधरोष्ठः ॥ १८ ॥

but in Mallinatha विन्यस्तशुक्लागुरु—, Bṛhaspati प्रयुक्तशुक्लागुरु , Bharata प्रयुक्तशुक्लागुरु , and Gopāla प्रयुक्तशुक्लागुरु—a typical illustration of the divergence between text and commentary, I 2 आसक्तशुक्लागुरु चकार अङ्ग गोरोचनापत्रविभङ्गमस्याः, I 1, I 3, Bh विन्यस्तशुक्लागुरु , P 5 सरोचनापत्र—, गोरोचनापत्रविभक्तमङ्गम् I 1, I 3, I 8, B 1, G, Bh विभङ्गमस्याः

16 *a So I 1, I 3, I 5 F, Bh, I 8 (with four commentators)*, for which cp III, 30, others लीन— *b* F, G —मेघरेखं

17 *a* I 1, I 3, I 5 I 8, G, F, Bh लोध्र—(but mark रेखा in F) *b* I 1, I 3 H 3 गोरोचनान्यास—, P-4, I 5 गोरोचनोद्भेदनि—, F, G, Bh गोरोचनाक्षेप—, I 8 गोरोचनापत्र—in Mallinātha, गोरोचनाभेद in Bṛhaspati, गोरोचनाभगनितान्तगौरे in Bharata (भग मण्ड, who records गोरोचनाभेद also), गोरोचनाभेद in Gopāla

18 *a* Vā I लेखाविभक्तश्च विभक्त—, G, F, Bh रेखाविभक्तः सुविभक्तगात्र्याः, I 8 लेखाविभक्तश्च विभक्तगात्र्याः (as in Vā I) in text, but रेखाविभक्तश्च विभक्त—in Mallinātha, लेखाविभक्तश्च पविभक्तगात्र्याः in Bṛhaspati (who records लेखाविभक्तश्च

पत्युः शिरश्चन्द्रकलामनेन
स्पृशेति सख्या परिहासपूर्वम् ।
सा रञ्जयित्वा चरणौ कृताशीर्
माल्येन तां निर्वचनं जघान ॥ १९ ॥
तस्याः सुजातोत्पलपत्रकान्ते
प्रसाधिकाभिर्नयने समीक्ष्य ।
न चक्षुषोः कान्तिविशेषबुद्ध्या
कालाञ्जनं मङ्गलमित्युपात्तम् ॥ २० ॥
सा सम्भवद्भिः कुसुमैर्लतेव
ज्योतिर्भिरुद्यद्भिरिव त्रियामा ।
सरिद्विहङ्गैरिव लीयमानैर्
आमुच्यमानाभरणा चकाशे ॥ २१ ॥
आत्मानमालोक्य च शोभमानम्
आदर्शबिम्बे स्तिमितायताक्षी ।

विनिक्तगान्धा as a variant), लेखाविनक्तश्च विभक्त—in Bharata and Gopāla *b* So Vā-1, I-8 in Bṛhaspati, Bharata and Gopāla, F, I 1, I 3, Bh.—विमृष्टरा followed by Mallinatha in I-8, Vā-3 मधून्मृष्टविसृष्ट— *d* H-3 —धरोष्ट—, I-8 फलावराष्ठ.

20 *b* F, P 2, I 1, I 2, I-3, Bh. निरीक्ष्य *c* I-8 चक्षुष कान्ति— followed by Bharata alone

21 *c* B-1 नीयमानै. *d* I-5, I-8—नीयमानैः—रारभ्यमानाभरणा चकाशे followed by Mallinātha as नायमानैराश्रयद्भि, आमुच्य मानाभरणाङ्गेषु प्रतिमुच्यमानाभरणा चकाशे, by Bṛhaspati नायमानैरानक्तैः, आरभ्यमानाभरणा, by Bharata नीयमानैः माच्छद्भि आराध्यमानाभरणा, and by Gopala नीयमानैः मश्लिष्टैः आरोप्यमाणाभरणा चकाश, Va-1 चकासे, H-3 —आबध्यमानाभरणैश्चकाशे, H-4 आबध्यमानाभरणा चकासे

हरोपयाने त्वरिता बभूव
स्त्रीणा प्रियालोकफलो हि वेष ॥ २२ ॥
अथाङ्गुलीभ्या हरितालमार्द्रं
मङ्गल्यमादाय मन शिला च ।
कर्णावसक्तामलदन्तपत्र
माता तदीय मुखमुन्नमय्य ॥ २३ ॥
उमास्तनोद्भेदमनुप्रवृद्धो
मनोरथो य प्रथम बभूव ।
तमेव मेना दुहितु कथचिद्
विवाहदीक्षातिलक चकार ॥ २४ ॥
बबन्ध चास्राकुलदृष्टिरस्या
स्थानान्तरे कल्पितसंनिवेशम् ।
धात्र्यङ्गुलीभि प्रतिसार्यमाणम्
ऊर्णामय कौतुकहस्तसूत्रम् ॥ २५ ॥

22 *b* I 1 I 3, I 8 आदर्शबिम्बस्तिमिता—, but commentators आदर्शबिम्बे स्ति— *c* P 5, I 2—पयानत्वरिता— *d* P 4 —फलो हृ वप

23 *a* So Va-1, I 8, P 3, I 2, I 3, H 3,—लिम्यां Vā 3, F, Bh, P 2, P-4, P-5, I 1, I 5 *b* G, Bh मागल्य— *d* H 3 मेना तदीय—, I 2—मुखमुन्ममज्ज (उन्ममार्जं ?), I 8 मुखमुन्ननाम in Brhaspati Bharata and Gopāla, Mallinātha adopting मुखमुन्नमय्य which is also found in F

24 *b* P 2, H 3, H-4, B 1 प्रथमो— c I 8 records तेनैव मेना as a variant followed by Br, who says तमेवेति पाठोऽसगत

25 *a* So F, Bh, Va 1 with majority, I 8 धात्र्यङ्गुलीभि परिमार्यमाण in text, but प्रतिसार्यमाण in Mallinātha and Bharata, प्रतिमार्यमान in Brhaspati and Gopāla *d* P 2—मय कङ्कण हस्तसूत्रम but on top margin—कौतुक—, P 5—मय कौतुकसूत्र हस्तम् but comment कौतुकहस्तसूत्रम्

क्षीरोदवेलेव सफेनपुञ्जा
पर्याप्तचन्द्रेव शरत् त्रियामा ।
नव नवक्षौमनिवासिनी सा
भूयो बभौ दर्पणमाददाना ॥ २६ ॥
तामर्चिताभ्य कुलदेवताभ्य
कुलप्रतिष्ठा प्रणमय्य माता ।
अकारयत् कारयितव्यदक्षा
क्रमेण पादग्रहण सतीनाम् ॥ २७ ॥
अखण्डित प्रेम लभस्व पत्युर्
इत्युच्यते ताभिरुमा स्म नम्रा ।
तया तु तस्यार्धशरीरलाभात्
पश्चात्कृता बन्धुजनाशिषोऽपि ॥ २८ ॥
इच्छाविभूत्योरनुरूपमद्रिस्
तस्या कृती कृत्यमशेषयित्वा ।
सभ्य समाया सुहृदास्थिताया
तस्थौ वृषाङ्कागमनप्रतीक्ष ॥ २९ ॥

26 c I-8 नव नव क्षौम—in Brhaspati नव नव बभौ, Bharata नव नवमदृष्टपूर्वमिव भूयाऽधिक च यथा स्यात्, Gopāla नव नव यथा स्यादेव क्षौम दुकूल निवसितु शील यस्या सा, but Mallinātha नव नवक्षौमनिवासिनी सा d P-5—माददाना

27 d P-3 corrects सतीनाम् into सतीनाम्

28 b I 2 ताभिरसौ स्म नम्रा c G., Bh—शरीरभाजा d I-8 तया तु तस्यार्धशरीरलाभादत्र कृता—with Mallinatha अर्धशरीर-भाजा पश्चात्कृता अवरीकृता, Brhaspati अर्धशरीरलाभाद्दूरी-कृता—, Bharata अर्धशरीरलाभात् जयकृता पश्चात्कृता जिता इत्यर्थ, Gopala अर्धशरीरलाभात् अवकृता

29. a F—रूपमद्र- d So F, V-3, P-5, H-4, I-8 in Mallinātha, Brhaspati, Bharata and Gopāla (who prefers—कागमन प्रतीक्ष्य but explains—गमनप्रतीक्ष also), Vā-1, P-3, P-4, B-1, I 1, I-3—गमन प्रतीक्ष्य

तावद्भवस्यापि कुबेरशैले
तत्पूर्वपाणिग्रहणानुरूपम् ।
प्रसाधनं मातृभिरादृताभिर्
न्यस्तं पुरस्तात् पुरशासनस्य ॥ ३० ॥

तद्गौरवान्मङ्गलमण्डनश्रीः
सा पस्पृशे केवलमीश्वरेण ।
स एव वेषः परिणेतुरिष्टं
भावान्तरं तस्य विभोः प्रपेदे ॥ ३१ ॥

बभूव भस्मैव सिताङ्गरागः
कपालमेवामलशेखरश्रीः ।
उपान्तभागेषु च रोचनाङ्को
गजाजिनस्यैव दुकूलभावः ॥ ३२ ॥

शङ्खान्तरद्योति विलोचनं यद्
अन्तर्निविष्टामलपिङ्गतारम् ।
सांनिध्यपक्षे हरितालमय्यास्
तदेव जातं तिलकक्रियायाः ॥ ३३ ॥

यथाप्रदेशं भुजगेश्वराणां
करिष्यतामाभरणान्तरत्वम् ।
शरीरमात्रं विकृतिं प्रपेदे
तथैव तस्थुः फणरत्नशोभाः ॥ ३४ ॥

30 G, Bh भवस्यापि, so I 8 in the four commentaries, P 5 कुबीरशैल d Va 1 स्मर—

31 c H 3, H 4, I 8—णेतुरिष्टो in Bṛhaspati Bharata and Gopāla, Mallinātha—णेतुरिष्ट— d F रूपान्तरं तस्य—

32 a I 5 शिताङ्ग— d F गजाजिनं चैव—

33 a H 3, H 4 नेत्रान्तरद्योति, P 5 शखान्तर द्योति—(शखान्तरं द्योति ? cp Mallinātha) accepted by Bharata in I 8 b G तदन्त— c B 1 सांनिध्ययोगे—, H 4 हरताल— d So I 8, with Mallinātha, Bṛhaspati, Bharata and Gopāla all explaining तिलकक्रियायाः, P 4 तिलक क्रि—

दिवापि निष्ठ्यूतमरीचिभासा
बाल्यादनाविष्कृतलाञ्छनेन ।
चन्द्रेण नित्यं प्रतिभिन्नमौलेश्
चूडामणेः किं ग्रहणं हरस्य ॥ ३५ ॥
इत्यद्भुतैकप्रभवः प्रभावात्
प्रसिद्धनेपथ्यविधेर्विधाता ।
आत्मानमासन्नगणोपनीते
खड्गे निषक्तप्रतिमं ददर्श ॥ ३६ ॥
स गोपतिं नन्दिभुजावलम्बी
शार्दूलचर्मान्तरितोरुपृष्ठम् ।
तद्भक्तिसंक्षिप्तबृहत्प्रमाणम्
आरुह्य कैलासमिव प्रतस्थे ॥ ३७ ॥
तं मातरो देवमनुव्रजन्त्यः
स्ववाहनक्षोभचलावतंसाः ।
मुखैः प्रभामण्डलरेणुगौरैः
पद्माकरं चक्रुरिवान्तरिक्षम् ॥ ३८ ॥

35 *a* F—निष्ठ्यूतमयूखभासा—, I-5—निष्ठ्यूतमनोज्ञभासा *b* P 2, P 3, B-1—विष्कृत—, P-5—अनाविष्कृतलक्षणेन *c* I-5 नित्य प्रतिबद्ध—

36 *a* and *b* I 1, I-3—प्रभव प्रभावा (त्) प्रसिद्धनेप—, H-3, P-5—नेपथ्यविधिर्वि—, I-8 उदारनेपथ्यविध—in Bharata and Gopala, Bh. प्रसिद्धनेपथ्य— *d* Vā 3, P-5, G निविक्तप्र—, I-8 in Gopāla नियुक्तप्रतिम (=संक्रान्तप्रतिच्छायम्)

37 *b* P-4—चर्मापिहितोरुपृष्ठम् *d* So majority, Vā 1, I 1, H-4—कैलास—

38 *b* H-3, H-4 सवाहनक्षोभ—, I 2 स्ववाहनाक्षोभ—, cp पर्यभिनत् and पर्यभिन्नत् in 14 for redundant आ *c* So Vā 1, P-5, F, G, S, P 2 corrects—रश्मिगौरं into—रेणुगौरं, I-8 मुखैस्त्व-तुण्डलरश्मिगौरं in Bṛhaspati, but in Bharata प्रभामण्डलरश्मिगौरं which is also the reading of *Gopāla* *d* So Vā-1,

तासां च पश्चात् कनकप्रभाणां
काली कपालाभरणा चकाशे ।
बलाकिनी नीलपयोदराजिर्
दूरं पुरः क्षिप्तशतह्रदेव ॥ ३९ ॥

ततो गणैः शूलभृतः पुरोगैर्
उदीरितो मङ्गलतूर्यघोषः ।
विमानशृङ्गाण्यवगाहमानः
शशंस सेवावसरं सुरेभ्यः ॥ ४० ॥

उपाददे तस्य सहस्ररश्मिस्
त्वष्ट्रा नवं निर्मितमातपत्रम् ।
स तद्दुकूलादविदूरमौलिर्
बभौ वहन् गाङ्गमिव प्रवाहम् ॥ ४१ ॥

मूर्ते च गङ्गायमुने तदानीं
सचामरे देवमसेविषाताम् ।
समुद्रगारूपविपर्ययेऽपि
सहंसपाते इव लक्ष्यमाणे ॥ ४२ ॥

I 2, I 5, I 8, पद्माकरीचक्रु I 8 in Bharata, Gopāla, Bh, P 5 and majority, F पद्माकर चक्रिरि—

39 *b* Vā 1, H 3, H 4, B 1 चकासे *c* I 8—राजी in Bharata and Gopāla, Mallinātha—राजि, F पयोदपंक्ति *d* Vā 3 दूरं परिक्षिप्तशतह्रदेव, I 8 दूरं पुरःक्षिप्ततडिल्लतेव in Bṛhaspati, Bharata and Gopāla, while Mallinātha adheres to—शतह्रदेव

40 *c* I 5, I 8 सुमहच्छृङ्गाण्य—in Bṛhaspati and Gopāla, while Mallinatha and Bharata read विमानशृङ्गाणि—

41 *a* H 3, H 4 समाददे— *b* वन नि P 4 *c* P 5—लादविभिन्नमौ— *d* So Va-1, P 3, P 4, P 5, I 2, I 1, I 3, H-4, H 3, B 1, F Bh बभौ पतद्गङ्ग इवोत्तमाङ्गे, so G, S, T (so P 2 with —गाङ्ग—) and I 8 with Mallinātha, Bṛhaspati, Bharata and Gopala

42 *a* H 3, H-4 पूत च (with comment)

तमन्वगच्छत् प्रथमो विधाता
श्रीवत्सलक्ष्मा पुरुषश्च साक्षात् ।
जयेति वाचा महिमानमस्य
संवर्धयन्तौ हविषेव वह्निम् ॥ ४३ ॥

एकैव मूर्तिर्बिभिदे त्रिधासौ
सामान्यमेषा प्रथमावरत्वम् ।
विष्णोर्हरस्तस्य हरि कदाचिद्
वेधास्तयोस्तावपि धातुराद्यौ ॥ ४४ ॥

त लोकपाला पुरुहूतमुख्या
श्रीलक्षणोत्सर्गविनीतवेषा ।
दृष्टिप्रदाने कृतनन्दिसज्ञास्
तद्दर्शिना प्राञ्जलय प्रणेमु ॥ ४५ ॥

कम्पेन मूर्ध्न शतपत्रयोनि
वाचा हरि वृत्रहण स्मितेन ।
आलोकमात्रेण सुरानशेषान्
सभावयामास यथाप्रधानम् ॥ ४६ ॥

तस्मै जयाशी ससृजे पुरस्तात्
सप्तर्षिभिस्तान् स्मितपूर्वमाह ।
विवाहयज्ञे विततेऽत्र यूयम्
अध्वर्यव पूर्ववृता मयेति ॥ ४७ ॥

विश्वावसुप्राग्रहरै प्रवीणै
सगीयमाननिपुरावदान ।

43. *a* F, Va 3, G, S, Bh तमभ्यग—, I-5 प्रथम वि— *d* P-4, P-5 समेत्रयन्तो
44 *a* P-4, P-5, F, G, S, T, Bh —धा सा *d* H 3, H-4, F, P-5 —रीड्यौ.
45 *b* H-3, H-4 श्रीलाञ्छना—, P-4 श्रीलक्षणात्सर्गवि—
47 *a* P-4 जयानि. *b* Va 1—महर्षिभिस्तान्— *d* Va 3 पूर्ववृता—

अध्वानमध्वान्तविकारलङ्घ्यस्
ततार ताराधिपखण्डधारी ॥ ४८ ॥
खे खेलगामी तमुवाह वाहः
सशब्दचामीकरकिंकिणीकः ।
तटाभिघातादिव लग्नपङ्के
धुन्वन् मुहुः प्रोतघने विषाणे ॥ ४९ ॥
स प्रापदप्राप्तपराभियोगं
नगेन्द्रगुप्तं नगरं मुहूर्तात् ।
पुरोविलग्नैर्हरदृष्टिपातैः
सुवर्णसूत्रैरिव कृष्यमाणम् ॥ ५० ॥
तस्योपकण्ठे घननीलकण्ठः
कुतूहलादुन्मुखपौरदृष्टः ।
स्वबाणचिह्नादवतीर्य मार्गाद्
आसन्नभूपृष्ठमियाय देवः ॥ ५१ ॥
तमृद्धिमद्बन्धुजनाधिरूढैर्
वृन्दैर्गजानां गिरिचक्रवर्ती ।

48 *a* F प्रायसरं प्र—, H 3 प्राग्रहरं प्र— *b* F —नत्रिपुरापदानं, P 3, Vā 1—मानस्त्रिपुरावदानं (—वदाह ?), H 3 सगीयमानत्रिपुरावदाहः (comment त्रिपुराणामवदाहः भस्मकरं) *d* P 4 —धिपखण्डधारी, I 8 recording तारापतिखण्ड—as a variant

49 *b* P 4, H 4—किंकणीकः *c* I 5 तटप्रघातादिव, H 3 H 4 तटानिघाता—(comment अविघात ताडनं)

50 *c* P 5 पुरो विविग्नैर्हर—, Bṛhaspati in I 8 पुरा विलग्ने हरदृष्टिपात्र (=ललाट) *d* P 2, P 3 P 4, P 5, F, I 5, G, S, T, Bh कृष्यमाण

51 *c* I 8 स्ववाहचिह्नादव—in Bṛhaspati (स्ववाहनं वृषः तेन चिह्नात्—), Bharata (स्ववाहचिह्नात् मार्गात्, कस्मिंश्चित् कल्पे हरस्य मेघो वाहनमासीत् अतएव मेघचिह्नमाकाशं, केचित्तु स्ववाहो वृषः स एव चिह्नं यस्य तदाकाशमित्याहुः तदसंगतम्) and Gopāla, but in Mallinātha स्वबाणचिह्नात् *d* P 4—भूपृष्टमि—

प्रत्युज्जगामागमनप्रतीतः
प्रफुल्लवृक्षैः कटकैरिव स्वैः ॥ ५२ ॥
वर्गावुभौ देवमहीधराणां
द्वारे पुरस्योद्घटितापिधाने ।
समीयतुर्दूरविसर्पिघोषौ
भिन्नैकसेतू पयसामिवौघौ ॥ ५३ ॥
ह्रीमानभूद् भूमिधरो हरेण
त्रैलोक्यवन्द्येन कृतप्रणामः ।
पूर्वं महिम्ना स हि तस्य दूरम्
आवर्जितं नात्मशिरो विवेद ॥ ५४ ॥
स प्रीतियोगाद् विकसन्मुखश्रीर्
जामातुरग्रेसरतामुपेत्य ।
प्रावेशयन् मन्दिरमृद्धमेनम्
आगुल्फकीर्णापणमार्गपुष्पम् ॥ ५५ ॥
तस्मिन् मुहूर्ते पुरसुन्दरीणाम्
ईशानसंदर्शनलालसानाम् ।

52. *c* गमनप्रतीश I-5, I-8 in Bṛhaspati, Bharata and Gopāla, but Mallinātha—प्रतीत (=हृष्ट), cp तस्थौ वृषाङ्कागमनप्रतीक्ष 29

53 *b* H-4—नामिधाने *d* Vā-1, I-5, I-8 मिवानौ, Bharata records जलौघौ as a variant

55 *a* H-3, H-4 न प्रीति— *c* I-5, I-8 प्रावेशयन्मन्दिरमभ्यमेनम् in Bharata and Gopāla, Mallinātha and Bṛhaspati not explaining ऋद्धम् or मध्यम् *d* F आगुल्म—, I-2 माङ्गल्यकीर्णापणमार्ग पुष्पम्, P-5 आगुल्फकीर्णाम्बरमार्गपुष्पम् (but comment कीर्णापण-मार्ग—), I 1 आगुल्फकीर्णान्तरपुष्पवर्षम्, I-5 आगुल्फपुष्पप्रकरावकीर्णम्, I-8 आगुल्फकीर्णान्तरपुष्पमार्गम्, not followed by any of the commentators who have Mallinātha आगुल्फकीर्णापण-पुष्पमार्गम्, Bṛhaspati आगुल्फमारोपितपुष्पमार्गम् which is adopted by Bharata and Gopāla

प्रासादमालासु बभूवुरित्थ
त्यक्तान्यकार्याणि विचेष्टितानि ॥ ५६ ॥
आलोकमार्ग सहसा व्रजन्त्या
कयाचिदुद्वेष्टनवान्तमाल्य ।
बद्धु न सभावित एव तावत्
करेण रुद्धोऽपि हि केशपाश ॥ ५७ ॥
प्रसाधिकालम्बितमग्रपादम्
आक्षिप्य काचिद् द्रवरागमेव ।
उत्सृष्टलीलागतिरागवाक्षाद्
अलक्तकाङ्का पदवी ततान ॥ ५८ ॥

56 *a* I 5 अस्मिन् *d* I 1, B 1, I 5, I 8 मुक्ताय—in text but त्यक्तान्यकार्याणि in the four commentators *d* I 2 विचेष्टनानि

57 *a* I-5 त्वरया व्रजन्त्या *b* I 1, I 3—उद्वेष्ठभवान्त—, I 8 उद्वेष्ट नवान्तमाल्य in Brhaspati, Bharata and in the explanation offered by Gopāla while his reading is उद्वेष्टितवान्तमाल्य Mallinātha उद्वेष्टनवीतमाल्य (=उद्गीर्णमाल्य) *c* G बन्धु which is followed by Gopāla in I 8 P 4 वघ्रेण स— *d* G रुद्धोऽपि च, so Mallinātha in I 8, I 5, I 8 रुद्धोऽपि न केशपाश in Bharata (बद्धु न सभावित एव न पारित एव करेणापि न रुद्धो न धृत केवल विस्रस्तपतितोऽभूदित्यर्थ) Gopāla agrees with Mallinātha He adds केचित् पठन्ति—'करेण रुद्धोऽपि हि केशपाश बद्धु न सभावित एव तावत्' तदयुक्तम्, cp Rv VII, 6

58 *b* Vā 3 आकृष्य काचि—(from "आक्षिप्य=आकृष्य" Mallinātha, Bharata, Gopāla) After this I 3 reads

स्तन धयन्त तनय विहाय कान्त कुचापीडनलोलहस्तम् ।
तथैव कार्पासकमुद्वहन्ती ययौ तयान्या रमया गवाक्षे ॥

P-3 modifies it as

स्तन धयन्त तनय विहाय विलोकनाय त्वरित व्रजन्ती ।
सप्रस्नुताभ्या (—प्रस्नुता) पदवी सिषेच काचित् स्तनाभ्या
पयसागवाक्षात् ॥

विलोचनं दक्षिणमञ्जनेन
सम्भाव्य तद्वञ्चितवामनेत्रा ।
तथैव वातायनसन्निकर्षं
ययौ शलाकामपरा वहन्ती ॥ ५९ ॥
जालान्तरप्रेषितदृष्टिरन्या
प्रस्थानभिन्नां न बबन्ध नीवीम् ।
नाभिप्रविष्टाभरणप्रभेण
हस्तेन तस्थाववलम्ब्य वासः ॥ ६० ॥
अर्धाचिता सत्वरमुत्थितायाः
पदे पदे दुर्निमिते गलन्ती ।
कस्याश्चिदासीद् रसना तदानीम्
अङ्गुष्ठमूलार्पितसूत्रशेषा ॥ ६१ ॥
तासां मुखैरासवगन्धगर्भैर्
व्याप्तान्तराः सान्द्रकुतूहलानाम् ।
विलोलनेत्रभ्रमरैर्गवाक्षाः
सहस्रपत्राभरणा इवासन् ॥ ६२ ॥

I 1 reads

प्रस्थापयन्ती पदवीं स्तनाभ्यां मिमेव काचित् पवनावभासान् ।

59 b I 1—वामनेत्रम्, cp Rv VII, 8

60 Cp. Rv VII, 9

61 a P-4 अर्वाञ्चिता— b So I 2, P-3, I-5 दुर्निमिता, P-5 दुर्निमितु (comment निधान निर्मलेन्, may be—दुर्निमित? adverbial use), F, Vā-1 दुर्निमिते, I-8 दुर्निमिते (=सम्भ्रमा दुर्न्यस्ते) in Mallinātha, दुर्निर्मिता (=एकत्रीकृता), दुर्निमिता? √mī 'fix') in Bṛhaspati and Bharata (दुर्निर्मिता व बन्धनरहिता) while Gopāla seems to follow दुर्निमिता, दुर्निमित correct from √mī 'fix'='ill fixed' c Vā-3, P-3, P-4, P-5, I 1, I-8 रशना, cp Rv VII, 10

62 a P-4—गन्धिगर्भै d So all the MSS except F which reads —पत्रावरणा—, cp Rv VII, 11, XI, 93d

तावत् पताकाकुलमिन्दुमौलिर्
उत्तोरणं राजपथं प्रपेदे ।
प्रासादशृङ्गाणि दिवापि कुर्वन्
ज्योत्स्नाभिषेकद्विगुणच्छवीनि ॥ ६३ ॥
तमेकदृश्यं नयनैः पिबन्त्यो
नार्यो न जग्मुर्विषयान्तराणि ।
तथा हि शेषेन्द्रियवृत्तिरासां
सर्वात्मना चक्षुरिव प्रविष्टा ॥ ६४ ॥
स्थाने तपो दुश्चरमेतदर्थम्
अपर्णया कोमलयाभितप्तम् ।
या दास्यमप्यस्य लभेत नारी
सा स्यात् कृतार्था किमुताङ्कशय्याम् ॥ ६५ ॥

63 P 3, P 5 reverse order of 63 64 *c* P 5 विमानशृङ्गाणि *d* I 2 योत्स्ना—, B 1 ज्योत्स्नाभिषङ्गाद्द्वि—, H 4—भिषेकाद्द्वि—, Bh, G —भिषेकद्विगुणद्युतीनि, P 3—द्विगुणत्मवीनि—, cp Rv VII, 4

64 *a* F ता शकर दृष्टिभिरापिबन्त्य, noted by Mallinatha as a variant *c* P-4, P 5 तदाहि, B 1, Vā 3 तथाहि सर्वेन्द्रियवृत्ति— *d* Brhaspati records विनोपघातेन खिलीबभूव as a variant explaining "उपघातेन आकस्मिकशब्दपातेन विना अ येषां चक्षुषोऽन्यषा-मिन्द्रियाणां वृत्ति खिलीभूतेति' सिल्मप्रहतो वध इति भूरि, Bharata आमा शेषेन्द्रियवृत्ति उपघातेन विष्टम्भेन रागादिविघ्नेन विना खिलीबभूव विफलीभूता, and so is Gopāla Cp Rv VII, 12

65 *a* Va-3 दुष्कर— *b* Bh पेलवयापि तप्तम्, पेलवयाभितप्तम् F. I 8 but commentators—यापि तप्तम् Gopāla reading पेलवया (=कोमलया), Vā-3, P-4 पेशलया पि—, cp V, 21 तथाभितप्त where MSS misread—पि नप्त—, P 2, I 2 read this śloka after न नूनमारूढरुषा (67)

परस्परेण स्पृहणीयशोभं
न चेदिदं द्वन्द्वमयोजयिष्यत् ।
अस्मिन् द्वये रूपविधानयत्नः
पत्युः प्रजानां विफलोऽभविष्यत् ॥ ६६ ॥
न नूनमारूढरुषा शरीरम्
अनेन दग्धं कुसुमायुधस्य ।
व्रीडादमुं देवमुदीक्ष्य मन्ये
संन्यस्तदेहः स्वयमेव कामः ॥ ६७ ॥
अनेन संबन्धमवाप्य दिष्ट्या
मनोरथप्रार्थितमीश्वरेण ।
मूर्धानमालि क्षितिधारणोच्चम्
उच्चैस्तरं वक्ष्यति शैलराजः ॥ ६८ ॥
इत्योषधिप्रस्थविलासिनीनां
शृण्वन् कथाः श्रोत्रसुखास्त्रिनेत्रः ।

66 *a* P-5—स्पृहणीयरूप *d* So F, I-5, I 8 with the four *commentators*, *others* वितथा—*for which cp* Rv VII, 14

67 *c* I-5 व्रीडावशादेनमुदीक्ष्य मन्ये, noted on margin by I-8 and recorded by Bharata as a variant H 3, H-4 reverse the order of 66-67

68 *a* F, G —स्वमुनन्य—, P-1 दृष्ट्या, so I 8 in text but दिष्ट्या in Bharata (=भाग्येन) and Gopāla (=पुण्येन), Bṛhaspati दृष्ट्या (दिष्ट्या ?) हर्षेण भाग्येन वा *c* मालि क्षितिपालनोच्च Vā 1, I 8 मूर्धानमास्य महीधराणाम्, followed by Bṛhaspati, Bharata and Gopala, Mallinātha explaining our reading even in I-8 *d* So F, G, S, Bh, so Mallinātha expressly in I 8, उच्चैस्तरा justified by Bṛhaspati, Bharata and Gopāla

केयूरचूर्णीकृतलाजमुष्टि
हिमालयस्यालयमाससाद ॥ ६९ ॥
ततोऽवतीर्याच्युतदत्तहस्त
शरद्घनाद् दीधितिमानिवोक्ष्ण ।
क्रान्तानि पूर्वं कमलासनेन
कक्षान्तराण्यद्रिपतेर्विवेश ॥ ७० ॥
तमन्वगिन्द्रप्रमुखाश्च देवा
सप्तर्षिपूर्वा परमर्षयश्च ।
गणाश्च गिर्यालयमभ्यगच्छन्
प्रशस्यमारम्भमिवोत्तमार्था ॥ ७१ ॥
तत्रेश्वरो विष्टरभाग् यथावत्
सरत्नमर्घ्यं मधुमच्च गव्यम् ।

69 *a* Vā-1, P 2, P-4 इत्योपधि— *c* So F, G, S, T, केयूरचूर्णीकृतलाजमुष्टि Vā 1, I 5 केयूरचूर्णं कृतलाजवृष्टि, I 1 केयूरकर्णंकृतलाजमुष्टि, I 8 कर्पूरचूर्णीकृतलाजवृष्टि, but Mallinatha कर्पूरचूर्णीकृतलाजमुष्टि, Brhaspati कर्पूरचूर्णिकृतलाजवर्षं (=कर्पूरचूर्णीभिकृतमभिनीतमर्यात् पौरनारीभिर्लाजाना वर्षं यत्र), Bharata कर्पूरचूर्णीकृतलाजवृष्टि (recording लाजवर्षम् also) and Gopāla कर्पूरचूर्णीकृतलाजमुष्टि recording कर्पूरचूर्णीकृतराजमार्गम् as a variant MSS differ in their order of ślokas as I 2 न नूनमारूढरुषा, अनेन सबन्धमवाप्य, परस्परेण स्पृहणीयशोभ So is Vā 3, P 3 परस्परेण—न नूनमारूढरुषा—इत्योपधिप्रस्थ—अनेन सबन्ध—, P 5 follows our order except that it puts 63 (तावत्पताका—) after इत्योपधि— Cp Rv VII, 16

70 *a* I 2, P 2, F, S, Bh तत्रावतीर्य— *d* F, S, G, P 3, P 5, Bh कक्ष्यान्त—, cp Rv VII, 17

71 *a* H 3 सर्वे महेन्द्रप्रमुखाश्च देवा, I 8 तमन्वयीन्द्रप्र—*but the four* commentators follow our reading *c* I 8, Bh अन्वगच्छन् *d* Vā 3, Bh प्रशस्तमारम्भ—, I 5 यश ममारम्भमिवोत्तमार्था, so I 8, followed only by Gopāla

नवे दुकूले च नगोपनीते
प्रत्यग्रहीत् सर्वममन्त्रवर्जम् ॥ ७२ ॥
दुकूलवासा स वधूसमीप
निन्ये विनीतैरवरोधरक्षै ।
वेलासकाश स्फुटफेनराजिर्
नवैरुदन्वानिव चन्द्रपादै ॥ ७३ ॥
तया प्रवृद्धाननचन्द्रकान्त्या
प्रफुल्लचक्षु कुमुद कुमार्या ।
प्रसन्नचेत सलिल शिवोऽभूत्
समृज्यमान शरदेव लोक ॥ ७४ ॥

72 *b* P 3—मर्त्रं, I-8—मध्यं मधुपर्कहव्यम् in Bharata (=मधुपर्करूप हव्य देवमङ्गम्) and Gopala, while Br reads मधुपर्कमिश्रम् which is the reading of Rv VII, 18 *c* नगोपनीत in Bh, F, G, S, T, and Mallinatha in I-8, where Brhaspati follows नगापनीते recording नगोपनीत as a variant, followed by Bharata and Gopāla *d* H 3—सर्वममन्त्रवाह्यम् (comment न मन्त्रैवाह्यम), G—सर्वमतत्रवर्जम्, I-8—सर्वममन्त्रवन्ध्यम्, followed by Brhaspati (=समन्त्रक), Bharata (न मन्त्रण वन्ध्य रहित) and Gopāla, while Mallinātha goes with our text Cp Rv VII, 18

73 *a* F दुकूलवान् मास्य वधूसमीप *b* F, G, S, T—वदक्षै, cp F on III, 32, cp Rv VII, 19, VI, 20, 45 and VI, 45, B-1, I-5—धमुख्यै, so I-8, followed by Brhaspati, Bharata and Gopala, while Mallinātha adopts—जवरोवदक्षै. *c* P 2, I 1, G वेलासमीप *d* Bh. चन्द्रपाद

74 *a* So F, G, S, T, I 2, I-5, I-8, Vā-1, H-3, H-4, B-1 विवृद्धा— *d* P 2 on margin मसृज्यमान obviously as comment I-8 शरदेव सिन्धु, followed by Brhaspati and recorded by Bharata, who prefers शरदेव लोक which alone is acceptable to Mallinātha Gopala reads सपुज्यमान शरदेव सिन्धु but adds शरदेव लोक इति च पाठ

तयो. समापत्तिपु कातराणि
किंचिद्व्यवस्थापितसहृतानि ।
ह्रीयन्त्रणामानशिरे मनोज्ञाम्
अन्योन्यलोलानि विलोचनानि ।। ७५ ।।

तस्या कर शैलगुरूपनीत
जग्राह ताम्राङ्गुलिमष्टमूर्ति ।
उमातनमा गूढतनो स्मरस्य
तच्छङ्किन पूर्वमिव प्ररोहम् ।। ७६ ।।

रोमोद्गम प्रादुरभूदुमाया
स्विन्नाङ्गुलि पुगवकेतुरासीत् ।
वृत्तिस्तयो पाणिसमागमेन
सम विभक्तेव मनोभवस्य ।। ७७ ।।

प्रयुक्तपाणिग्रहण यदन्यद्
वधूवर पुष्यति कान्तिमग्र्याम् ।
सानिध्ययोगादनयोस्तदानी
कि कथ्यते श्रीरुभयस्य तस्य ।। ७८ ।।

प्रदक्षिणप्रक्रमणात् कृशानोर्
उदर्चिपस्तत् मिथुन चकाशे ।

75 *c* P 5—णामन्वभवन् मनोज्ञाम्, ह्रीयन्त्रणा तत्क्षणमन्वभूवन् F, Bh, P 2, G., S T, I 8, followed by the four commentators Cp Rv VII, 25

76 *c* Γ, G, S, T Bh, I 8 उमातनौ, followed by the four commentators Cp Rv VII, 15

77 *d* P-4, I 5, I 8 मनोभवेन but Mallınātha, Bṛhaspatı and Bharata explain मनोभवस्य Cp Rv VII, 22

78 *c* I 8—यागादुभया—, followed by Bṛhaspatı and Gopāla while Mallınatha and Bharata have अनया *d* P-4, P 5, B-1 कथ्यता

मेरोरुपान्तेष्विव वर्तमानम्
अन्योन्यसंसक्तमहस्त्रियामम् ।। ७९ ।।
तौ दम्पती त्रिः परिणीय वह्निम्
अन्योन्यसंस्पर्शनिमीलिताक्षौ ।
स कारयामास वधूं पुरोधाः
तस्मिन् समिद्धार्चिषि लाजमोक्षम् ।। ८० ।।
सा लाजधूमाञ्जलिमिष्टगन्धं
गुरूपदेशाद् वदनं निनाय ।
कपोलसंसर्पिशिखः स तस्या
मुहूर्तकर्णोत्पलतां प्रपेदे ।। ८१ ।।
तदीषदार्द्रारुणगण्डलेखम्
उच्छ्वासिकालाञ्जनरागमक्ष्णोः ।
वधूमुखं क्लान्तयवावतंसम्
आचारधूमग्रहणाद् बभूव ।। ८२ ।।
वधूं द्विजः प्राह तवैष वत्से
वह्निर्विवाहं प्रति पूर्वसाक्षी ।

79 *a* I-8 प्रदक्षिण प्रक्र—, not followed by the four commentators *b* Vā 1 चक्रामे, I 8 बभासे in Mallinātha, and implied by Bṛhaspati, Bharata and Gopāla चकासे *d* I 5—न्यसयुक्त—; I 6—न्यसत्यक्तम— Cp Rv VII, 24

80 *a* F परिणिय्य, a common practice in F *b* P-4—ह्नि कराग्र-सम्पर्श—, so P 5, I-8—Bṛhaspati—सपर्कनि—, cp III, 36 भृङ्गेण सम्पर्शनिमीलिताक्षी *d* Vā 1 लाजहोमम्, cp लाजविसर्गमग्नौ, Rv VII, 25 लाजमोक्षम् Cp Rv VII, 25

81 *a* Vā 3—गन्धि (comment गन्ध) *c* P-4—संस्पर्शिशिख, I 8 *—शिख in text,—शिख in commentaries = Rv VII, 26*

82 *a* I 8 तदीषदार्द्रारुणगण्डलेख, not followed by any commentator, for Mallinātha and Bṛhaspati follow our reading while Bharata and Gopāla adopt तदीषदार्द्रारुणपत्रलेख = Rv VII, 27

शिवेन भर्त्रा सह धर्मचर्या
कार्या त्वयामुक्तविचारयेति ॥ ८३ ॥
आलोचनान्तं श्रवणौ वितत्य
पीतं गुरोस्तद् वचनं भवान्या ।
निदाघकालोल्बणभेदयेव
माहेन्द्रमम्भः प्रथमं पृथिव्या ॥ ८४ ॥
ध्रुवेण भर्त्रा ध्रुवदर्शनाय
प्रयुज्यमाना प्रियदर्शनेन ।
सा दृष्ट इत्याननमुन्नमय्य
ह्रीसन्नकण्ठी कथमप्युवाच ॥ ८५ ॥
इत्थं विधिज्ञेन पुरोहितेन
प्रयुक्तपाणिग्रहणोपचारौ ।
प्रणेमतुस्तौ पितरौ प्रजानां
पद्मासनस्थाय पितामहाय ॥ ८६ ॥

83 *a* I 5—त्वेंप पुत्रि *b* F, G, S, T, Bh —कर्मसाक्षी—; so I 8 in Mallinātha but पूर्वसाक्षी—in Bṛhaspati, Bharata (who notes कर्ममाक्षी) and Gopāla *d* I 8 युक्तविचारयेति in Bharata and Mallinatha (can be read as मुक्त—), Brhaspati त्वयामुक्तविचारयति (—या+आ—) citing "आमुक्त प्रतिमुक्तश्च पिनद्धश्चापि लब्धवत्", Bharata notes कार्या त्वया नात्र विचारणेति as a variant

84 So Vā-1, P 2, P 3, I 2 and Mallinātha in I 8, P 4 आलोचनन् श्रवणौ वितत्य, P 5 आलोचनाच्छ्रवणौ वितत्य, आलोचनान्तं श्रवण विवृत्य Vā-3, F, I 3, B 1, I 8 in Brhaspati, आलोचनान्त श्रवणे वितत्य (Bh) in Bharata *c* —तप्तयेव Vā 1, P 2, I 2, Va 3—ल्वणखेदयेव (comment तापया—खेदया), F, Bh, G, S, T, P-4, P 5, I 3, I 8—ल्वणतापयेव in Mallinātha, Brhaspati and Bharata, निदाघकालोल्लल (ल्वण?) भेदयेव (="ग्रीष्मसमये उल्ल्लो महान् भेदो विदारण यस्या तया') For the apt use of उल्वण cp उल्वणो मार्ग Rv IV, 33

85 *c* I 3, I 5, I-8 दृष्टम् *in Bṛhaspati and Bharata*

वधूर्विधात्रा प्रतिनन्द्यते स्म
कल्याणि वीरप्रसवा भवेति ।
वाचस्पति मन्नपि सोऽष्टमूर्ताव्
आशास्यचिन्तास्तिमितो बभूव ॥ ८७ ॥
क्लृप्तोपचारां चतुरस्रवेदीं
तावेत्य पश्चात् कनकासनस्थौ ।
जायापती लौकिकमेषितव्यम्
आर्द्राक्षतारोपणमन्वभूताम् ॥ ८८ ॥
पत्रान्तलग्नैर्जलबिन्दुवृन्दैर्
आकृष्टमुक्ताफलजालशोभम् ।
तयोरुपर्यायतनालदण्डम्
आधत्त लक्ष्मी कमलातपत्रम् ॥ ८९ ॥
द्विधा प्रयुक्तेन च वाङ्मयेन
सरस्वती तन्मिथुनं नुनाव ।
सम्स्कारपूतेन वरं वरेण्यं
वधूं सुखग्राह्यनिबन्धनेन ॥ ९० ॥
तौ संधिषु व्यञ्जितवृत्तिभेदं
रसान्तरेषु प्रतिभिन्नरागम् ।

87 *d* Bh., G मूर्तौ त्वाशास्य— Bharata—आशास्यचिन्तया आशंसनीयचिन्तया स्तिमित

88 *a* P-5—पचारा, F चतुरस्रवेदी; P-4, P-5 चतुरन्नवेदी *b* I-8 उपेत्य पश्चात् but comment एत्य *c* Bh., F—मेषणीय— *d*=Rv. VII, 28*d*.

89 *a* P-4—बिन्दुवन्धैः, Vā-3, G, F, Bh., S, T—बिन्दुजालैः; so I-8 in Bharata and Mallinātha, though the text has—बिन्दुवृन्दैः which is followed by Gopāla *b* Vā-3 —मुक्ताफलभक्ति—.

अपश्यतामप्सरसा मुहूर्तं
प्रयोगमाद्य ललिताङ्गहारम् ।। ९१ ।।
देवास्तदन्ते हरमूढभार्यं
किरीटवद्धाञ्जलयो निपत्य ।
शापावसानप्रतिपन्नमूर्तेर्
ययाचिरे पञ्चशरस्य सेवाम् ।। ९२ ।।
तस्यानुमेने भगवान् विमन्युर्
व्यापारमात्मन्यपि सायकानाम् ।
काले प्रयुक्ता खलु कार्यविद्भिर्
विज्ञापना भर्तृषु सिद्धिमेति ।। ९३ ।।

91 *b* Bh, I 8 प्रतिबन्धरागम् (प्रतिबद्ध ?) in Mallinatha, प्रतिभिन्नरागम् in Brhaspati and Bharata for which cp VII, 7*b*, majority प्रतिबद्धरागम् *d* P 5—ङ्गरागम् (comment —ङ्गहारम्)

92 *b* P 4—दत्ता—, so I 8 in Brhaspati and Bharata *c* Bh, I 8, G, S —वसाने, but the compound may as well be resolved शापावसानात् (=कारणात्) प्रति—? Vā 1—प्रतिलब्धमूर्ते— Bharata इत पर यत् श्लोकत्रय क्वचित् पुस्तके दृश्यते तट्टीकाकृद्भिरव्याख्यातम् ।

93 *b* P 3 सेवकानाम् *c* So Vā 1, others कालप्र—, Vā 1 कालविद्भि After this I 3, P 3 add

देवेशसंपादितचारुमूर्तिस्तत्समसदि प्रादुरभूत् स काम ।
लक्ष्मीकृतेन शङ्करमेव भूयो विध्यन् शरैः पुष्पमयैरमोघैः ।।

P 5 reads before 94

तत परं तत्र गिरीशनाथो
यथाप्रधानं त्रिदिवेश्वराणाम् ।
चकार रत्नैः पृथगर्घणां स
मेनानीता विधिवत् प्रणम्य ।।

After this I 1 adds 4 ślokas

तं प्रेक्ष्य वशीकृतचारुचापम्
अत्यन्तसंभावितदेवकार्यम् ।

अथ विबुधगणास्तानिन्दुमौलिर्विसृज्य
क्षितिधरपतिकन्यामाददानः करेण ।
कनककलशरक्षाभक्तिशोभासनाथं
क्षितिविरचितशय्यं कौतुकागारमागात् ॥ ९४ ॥
नवपरिणयलज्जाभूषणां तत्र गौरीं
वदनमपहरन्तीं तत्कृतोत्क्षेपमीशः ।

ब्रह्मादयः साध्विति देवसंघा
प्रीत्या मुहुः प्राहुरिति स्तुवन्तः ॥ ९७ ॥
पुष्पेषुमेनं (मेनं च) रतिर्विलोक्य
पूर्वोक्तवाक्प्रत्ययकालजातम् ।
हृत्प्रेमसहर्षविमूढभावान्
किंकि न कुर्यामिति नाभ्यजानात् ॥ ९८ ॥
चैनामवेत्याप्युपमनाः
वागीश्वरादीनभिवीक्ष्य देवान् ।
बद्धाञ्जलिर्न्यस्तशराननेषु
भूमौ प्रणामेन तत पपात ॥ ९९ ॥
ते त समुत्थाप्य कृतप्रणामं
रतिं विरागामिह्वया च तेन ।
सयाज्य पूजा प्रतिचक्रुरस्य
मत्तार्मुक्त्या ॥

All these slokas have, however, been scored off 93 has all the four comments

94 F, I-5, P-5 °पादवान c Vā-1 रक्षा, I 1 corrects रक्षा into युक्त, I-8 Brhaspati ("कनकस्य कलशा यत्र कक्षाया प्रकोष्ठस्य भक्त्या या शोभा तया सनाथ परमैश्वर्ययुक्तम्") and Bharata (कनककलशस्य, कक्षाया प्रकोष्ठस्य, भक्तेर्विभागस्य च या शोभा तया सनाथम्) adopt—कक्षा—, but the original reading seems to be—रक्षा-भक्ति="decorative drawings meant for protection from evil" Majority (with Bh.) कनककलशयुक्त भक्तिशोभासनाथम्

अपि शयनसखीभ्यो दत्तवाच कथंचित्
प्रमथमुखविकारैर्हासयामास गूढम् ॥ ९५ ॥

**इति श्रीकुमारसम्भवे महाकाव्ये कविकालिदासकृतौ गौरीविवाहवर्णन नाम सप्तम सर्ग. ॥**

95 *b* So Va-1, P 4, P 5, I 2, P 2, I 1, I 3, G, S, T, Bh, F तत्कृताक्षेपम्, so I 8 in Mallinātha (—तेन कृताक्षप कृताकर्षण मुन्नीत वदनम्), but तर्किताक्षेपम् in Brhaspati (=ईषद्व्यक्ताक्षेप यथा स्यात्तथा), Bharata (तर्कितोऽनुमितो अर्थादीशकर्तृक आक्षपो यत्र तादृश यथा स्यात्तथा) and Gopala (ईषद्व्यक्ताक्षेप यथा स्यात्तथा) *d* So F with majority, Vā 1, B 1 प्रथममुखविकारै, so I 8 in Brhaspati, Bharata and Gopāla, I 5 प्रमथसुखविहारै, I 1 I 3 प्रमथसुखविकारै

Colophon varies I 1, I 5, I 3, I 8, Bh उमापरिणयो नाम ,
I 2 उमापाणिग्रहणो नाम , B 1 गौरीविवाहो नाम ।

## ॥ अष्टमः सर्गः ॥

पाणिपीडनविधेरनन्तरं
शैलराजदुहितुर्हरं प्रति ।
भावसाध्वसपरिग्रहादभूत्
कामदोहदमनोहरं वपुः ॥ १ ॥
व्याहृता प्रतिवचो न संदधे
गन्तुमैच्छदवलम्बितांशुका ।
सेवते स्म शयनं पराङ्मुखी
सा तथापि रतये पिनाकिनः ॥ २ ॥
कैतवेन शयिते कुतूहलात्
पार्वती प्रतिमुखं निपातितम् ।
चक्षुरुन्मिषति सस्मितं प्रिये
विद्युदाहतमिव न्यमीलयत् ॥ ३ ॥
नाभिदेशनिहितः सकम्पया
शंकरस्य रुरुधे तया करः ।
तन्नितम्बमथ चाभवत् स्वयं
दूरमुच्छ्वसितनीविबन्धनम् ॥ ४ ॥
एवमालि निगृहीतसाध्वसं
शंकरो रहसि सेव्यतामिति ।

1 *d* F कामदोहदमुखं मनोहरम् with no variants noted, T agrees with it, P-5 कामदोहदमुख मनोहरम् (comment कामदोहदेन मन्मथाभिलापेण मुखं (सुख ?))
2 *b* P-5—दविलम्बि—
3 *a* P 2, P-3, Bh शयने *b* P 2 पार्वती *c* P 2 प्रिया *d* S विद्युताहत—, P-5 विद्युतेव पिहित न्य—
4 *b* F रुरुधे करस्तया *c* So P-5, T तन्नितम्बमभवत्तदा स्वयं, others (with Bh.) तद्दुकूल—

सा सखीभिरुपदिष्टमाकुला
नास्मरत् प्रमुखवर्तिनि प्रिये ॥ ५ ॥
अप्यवस्तुनि कथाप्रवृत्तये
प्रश्नतत्परमनङ्गशासनम् ।
वीक्षितेन परिगृह्य पार्वती
मूर्धकम्पमयमुत्तरं ददौ ॥ ६ ॥
शूलिनः करतलद्वयेन सा
संनिरुध्य नयने हृतांशुका ।
तस्य पश्यति ललाटलोचने
मोघयत्नविधुरा रहस्यभूत् ॥ ७ ॥
चुम्बनेष्वधरदानवर्जितं
सन्नहस्तमदयोपगूहने ।
क्लिष्टमन्मथमपि प्रियं प्रभोर्
दुर्लभप्रतिकृतं वधूरतम् ॥ ८ ॥
यन्मुखग्रहणमक्षताधरं
दत्तमव्रणपदं नखं च यत् ।
यद्रतं च सदयं हरस्य तत्
पार्वती विषहते स्म नेतरत् ॥ ९ ॥
रात्रिवृत्तमनुयोक्तुमुद्यतं
सा विभातसमये सखीजनम् ।

6 *c* So Vā 1, T, F, others परिवीक्ष्य
7 *d* P 3 मोघवृत्तिविधुरा
8 *a* P 2—ने त्वधर— *b* S खिन्नहस्तसदयोपगूहनम्, स्विन्न—?, cp VI, 44c *c* F विभोर्दु— *d* F वधूकृतम्, Bh दुर्लभ प्रतिकृत वधूरतम्, cp Rv XIX, 27
9 *b* P 1, S दानमव्रणपद नखस्य यत् *c* F, S, Bh प्रियस्य तत् *d* P-5 नेतरम्

नाकरोदपकुतूहल ह्रिया
शसितु तु हृदयेन तत्वरे ॥ १० ॥
दर्पणे च परिभोगदर्शिनी
पृष्ठत प्रणयिनो निषेदुष ।
प्रेक्ष्य बिम्बमनु बिम्बमात्मन
कानि कानि न चकार लज्जया ॥ ११ ॥
नीलकण्ठपरिभुक्तयौवना
ता विलोक्य जननी समाश्वसत् ।
भर्तृवल्लभतया हि मानसी
मातुरस्यति शुच वधूजन ॥ १२ ॥
वासराणि कतिचित् कथचन
स्थाणुना पदमकार्यत प्रिया ।
ज्ञानमन्मथरसा शनै शनै
सा मुमोच रतिदु खशीलताम् ॥ १३ ॥
सस्वजे प्रियमुरोनिपीडिता
प्रार्थित मुखमनेन नाहरत् ।
मेखलाप्रणयलोलता गत
हस्तमस्य शिथिल रुरोध सा ॥ १४ ॥
भावसूचितमदृष्टविप्रिय
चाटुमत् क्षणवियोगकातरम् ।
कैश्चिदेव दिवसैस्तयोस्तथा
प्रेम रूढमितरेतराश्रयम् ॥ १५ ॥

10 *b* S प्रभातसमये *c* F प्रिया *d* F हृदयेन तत्परा, Bh शसितु च हृदयेन तत्वरे.
11. *c* F बिम्बमुपबिम्ब— *d* S, T. कानि कान्यपि चकार—
12 *b* T, G, Bh समाश्वसीत्
13 *b* S स्थाणुना रतमकारि चानया *d* P-4, Bh —रतदु ख—
14 *a* S —मुरोनिपीडन, Bh —उरोनिपीडित. *c* F मेखला
15 *b* So Vā-1, F, G; T चाटु तत्क्षण—, S दाक्षिण्यानुक्षण—
*c* T, Bh, Vā-1 तयाम्—तदा

स यथात्मसदृश वर वधूर्
अन्वरज्यत वरस्तथैव ताम् ।
सागरादनपगा हि जाह्नवी
सोऽपि तन्मुखरसैकनिर्वृति ॥ १६ ॥
शिष्यता निधुवनोपदेशिन
शकरस्य रहसि प्रपन्नया ।
शिक्षित युवतिनैपुण तया
यत्तदेव गुरुदक्षिणीकृतम् ॥ १७ ॥
दष्टमुक्तमधरोष्ठमम्बिका
वेदनाविधुतपाणिपल्लवा ।
शीतलेन निरवापयत् क्षण
मौलिचन्द्रशकलेन शूलिन ॥ १८ ॥
चुम्बनादलकचूर्णरूपित
शकरोऽपि नयन ललाटजम् ।
उच्छ्वसत्कमलगन्धये ददौ
पार्वतीवदनगन्धवाहिने ॥ १९ ॥
एवमिन्द्रियसुखस्य वर्त्मन
सेवनादनुगृहीतमन्मथ ।

16 *d* S तन्मुखरसैकवृत्तिभाक्

17 *a* F निधुवरोप— *d* T तत् तदेवगुरु—

18 *a* Bh अधरोष्ठ— *b* S, P 5—हस्तपल्लवा

19 So G, F, Vā-1, P 2, P 3, P 5, T—चूर्णदूषित (cp 64 —भोगदूषित) *b* F—रोऽप *c* P-4 उत्स्वसत्— *d* F—गन्धवादिने Bh

*उच्छ्वसत्कमलगन्धये ददौ*
पार्वतीवदनगन्धवाहिने ।
चुम्बनादलकचूर्णदूषित
शकरोऽपि नयन ललाटजम् ॥

शैलराजभवने सहोमया
मासमानमवसद् वृषध्वज ॥ २० ॥
सोऽनुमन्त्य हिमवन्तमात्मभूर्
आत्मजाविरहदुःखपीडितम् ।
तत्र तत्र विजहार सपतन्
अप्रमेयगतिना ककुद्मता ॥ २१ ॥
मेरुमेत्य मरुदाशुवाहन
पार्वतीस्तनपुरस्कृत कृती ।
हेमपल्लवविभङ्गमस्तरान्
अन्वभूत् सुरतमर्दनक्षमान् ॥ २२ ॥
पद्मनाभवलयाङ्कितास्मसु
प्राप्तवत्स्वमृतविप्रुषो नवा ।
मन्दरस्य कटकेषु चावमत्
पार्वतीवदनपद्मषट्पद ॥ २३ ॥
रावणध्वनितभीतया तया
कण्ठसक्तघनबाहुबन्धन ।

20 *a* T—सुखस्य चात्मन

21 *a* So Vā-1, T, F, P-3, P-4, P-5, G, S, Bh. सोऽनुमान्य *b* S—विरहदुःखखदिनम् *c* G Bh सचरन्

22 *a* Bh. as ours, F मेरुमत्नु मरुदा—, P 1 मेरुमेत्य मरुदाशुगात्मक (—गोमक ?), S—मरुदाशुगात्मक (=आशुग उमा यस्य) *b* So Vā 1, F, Bh, G, T, others—पुरस्कृतान् *c* and *d* So Vā-1, T, S, F, G, P-5 हेमपल्लवविभङ्गसंस्तरामन्वभून् सुरततत्पर क्षपाम् (*so* Bh *except in* हैम—), P 2—सुरतनतुरभिप्सम् (=सुरते ता पुर भिप्त्वा ?)

23 *a* S, T, Bh—नामचरणाङ्कितास्मसु *b* P 2 नवान् *c* Vā-1 —सावसत् *d* F सुप्रियावदन—

एकपिङ्गलगिरौ जगद्गुरुर्
निर्विवेश विशदा शशिप्रभा ॥ २४ ॥
तस्य जातु मलयस्थलीरतेर्
धूतचन्दनवन प्रियाक्लमम् ।
आचचाम सलवङ्गकेसरश्
चाटुकार इव दक्षिणानिल ॥ २५ ॥
हेमतामरसताडितप्रिया
तत्कराम्बुविनिमीलितेक्षणा ।
खे व्यगाहत तरङ्गिणीमुमा
मीनपङ्क्तिपुनरुक्तमेखला ॥ २६ ॥
ता पुलोमतनयालकोचितै
पारिजातकुसुमै प्रसाधयन् ।
नन्दने चिरमयुग्मलोचन
सस्पृह सुरवधूभिरीक्षित ॥ २७ ॥
इत्यभौममनुभूय शकर
पार्थिव च वनितासख सुखम् ।
लोहितायति कदाचिदातपे
गन्धमादनवन न्यवर्तत ॥ २८ ॥
तत्र काञ्चनशिलातलाश्रयो
नेत्रगम्यमवलोक्य भास्करम् ।

24 *a* T वारणस्वनित for ध्वनित, others रावणध्वनित— *b* So Va-1, S —सक्तदृढबाहु—, F, G, T, Bh —सक्तमृदुबाहु—; P 2—वन्धनम् Ellora represents Rāvaṇa shaking Kailāsa.

25 *a* Bh —मलयस्थलीरते (no *visargas*) *b* So T, others —धूतचन्दनलत *c* T —केशर—, Bh —सतुषारशीतलं

26 *a* Bh हैमताम— *c* T सा व्यगाहत (cp I 1) *d* Bh —मेखलाम्

27 *d* So F, T, S, G, Va 2—स्पृहमिरीक्षित

28 *b* P 2, P 3, S दयितासख *d* So Va 2, P 3, P-4, G, S, Bh; P 2, P 5—मादनगिरि न्यवर्तत, T —मादनवन व्यगाहत

दक्षिणेतरभुजव्यपाश्रया
व्याजहार सहधर्मचारिणीम् ॥ २९ ॥
पद्मकान्तिमरुणत्रिभागयो
संक्रमय्य तव नेत्रयोरिव ।
संक्षये जगदिव प्रजेश्वर
संहरत्यहरसावहर्पति ॥ ३० ॥
शीकरव्यतिकरं मरीचिभिर्
धूनयत्यवनते विवस्वति ।
इन्द्रचापपरिवेषशून्यता
निर्झरास्तव पितुर्व्रजन्त्यमी ॥ ३१ ॥
दष्टतामरसकेसरस्रजो
क्रन्दतोर्विपरिवृत्तकण्ठयो ।
निघ्नयो सरसि चक्रवाकयोर्
अल्पमन्तरमनल्पता गतम् ॥ ३२ ॥
स्थानमाह्निकमपास्य दन्तिन
सल्लकीविटपभङ्गवासितम् ।
आविभातचरणाय गृह्णते
वारि वारिरुहबद्धषट्पदम् ॥ ३३ ॥
पश्य पश्चिमदिगन्तलम्बिना
निर्मितं मितकथे विवस्वता ।

29 a P-4 काञ्चनगुहाशिलाश्रयो, others—तलाश्रये
30 a T —मरुणान्तभागया— b P 1 सगमय्य तव
31. a Va-1 शीकरद्युतिकर, G, S शीकरव्यतिकर b So T, others दूर—, c Va-1—परिवेश— d T, Va-2 निर्झरा प्रभवितुर्व्रजन्ति ते
32 a Va-1—केसर—, T दष्टतामरसकेसरस्रजा, so Va-2, S b P-3, Bh क्रन्दतोर्विरहदीनकण्ठयो c T, Bh भिन्नयो सरसि d So MSS, Va-1—रल्पमन्तरम—, cp note on 39
33 a T, दन्तिनो c T आविभाति शरणाय गच्छता, P 1 माध्यन्दिनं विषयेऽनुगृह्णते

दीर्घया प्रतिमया सरोऽम्भसा
तापनीयमिव सेतुबन्धनम् ॥ ३४ ॥
उत्तरन्ति विनिकीर्य पल्वलं
गाढपङ्कमतिवाहितातपाः ।
दंष्ट्रिणो वनवराहयूथपा
दष्टभङ्गुरबिसाङ्कुरा इव ॥ ३५ ॥
एष वृक्षशिखरे कृतास्पदो
जातरूपरसवर्हमण्डलः ।
हीयमानमहरत्ययातपं
पीवरोरु पिबतीव बर्हिणः ॥ ३६ ॥
पूर्वभागतिमिरप्रवृत्तिभिर्
व्यक्तपङ्कमिव जातमेकतः ।
खं हृतातपजलं विवस्वता
भाति किंचिदिव शेषवत्सरः ॥ ३७ ॥
आविशद्भिरुटजाङ्गणं मृगैर्
मूलसेकसरसैश्च वृक्षकैः ।
आश्रमाः प्रविशदग्र्यधेनवो
बिभ्रति श्रियमुदीरिताग्नयः ॥ ३८ ॥

34 *b* P 4 मितक्थ, Vā 2, T क्थमिद *c* S लव्वया प्रति—, F —म्भसा—

35 *b* P 4—पङ्कविनिवारितातपा *d* Vā 1—विशा—, F, Bh —विसा—

36 *b* So F, S Vā 1, Vā 2, P 3, P 4, Bh जातरूपरसगौरमण्डलम्, T, P 2 जातरूपरसगौरमण्डल, cp Mallinātha in G जातरूपरस गौरमण्डल आतपरूपणात् काञ्चनद्रववदरुणवर्हमण्डल, which may support F *c* F ह्रियमाण—

37 *b* So Vā 1, F S, T लग्नपङ्क— *d* Vā 1 शेषवत्

38 *a* P 2, B 3 आवसद्भि—, Vā 2—ङ्गणे, Bh आविशद्भिरुट जाङ्गन— *c* So S, P 1—शदग्यधनवो (—दग्र्य ?), Vā 1, F, T, Bh P 2, P 3—शदग्निधनवो, cp अग्निपरिमेयरश्मिना in 40

बद्धकोशमपि तिष्ठति क्षण
मादशेषविवर कुशेशयम् ।
षट्पदाय वसति ग्रहीष्यते
प्रीतिपूर्वमिव दातुमन्तरम् ॥ ३९ ॥
दूरमग्निपरिपेयरश्मिना
वारुणी दिगरुणेन भानुना ।
भाति केसरवतेव मण्डिता
बन्धुजीवतिलकेन कन्यका ॥ ४० ॥
सामभि सहचरा सहस्रश
स्यन्दनाश्वहृदयगमस्वरै ।
भानुमग्निपरिकीर्णतेजस
सस्तुवन्ति किरणोष्मपायिन ॥ ४१ ॥
सोऽयमानतशिरोधरैर्हयै
कर्णचामरविघट्टितेक्षणै ।
अस्तमेति युगभुग्नकेसरै
सनिधाय दिवस महोदधौ ॥ ४२ ॥
ख प्रसुप्तमिव सस्थिते रवौ
तेजसो महत ईदृशी गति ।

39 *d* S records उत्तरम् as a variant Note Vā-1 अम्बरम् for अन्तरम् in 32

40 *a* So Bh , F दूरमग्रपरिमेयरश्मिना, P 1, P-3, S —मग्रपरिमेयरश्मिना, Va-1, T (दूरमग्निपरिमेयरश्मिना चाग्निना परिमया रश्मया यस्य तेन), cp Aitareya Br 8, 28, 9-10 "the sun, while setting, enters into fire", and Rv V, 37, 1 and note on 38
*c* Vā 1 केशर— *d* Va-2—जीवकुसुमपु र्व—, T —जीवकुसुमेन—

41 *a* and *b* So Va-1, F , So T —श्वा चन्दनैश्च हृदयगमस्वनै
*c* P-4—मग्निविनिकीर्ण—

42 F सोमयानत—, T सोऽयमानतशिरारुहैर्हयै *c* F युगभुग्नकेसरै , Va 1, P 3 युगभग्नकेसरै

तत् प्रकाशयति यावदुद्गत
मीलनाय खलु तावतश्च्युतम् ॥ ४३ ॥
सध्ययाप्यनुगत रवेर्वपुर्
वन्द्यमस्तशिखरे समर्पितम् ।
येन पूर्वमुदये पुरस्कृता
नानुयास्यति कथ तमापदि ॥ ४४ ॥
रक्तपीतकपिशा पयोमुचा
कोटय कुटिलकेशि भान्त्यमू ।
द्रक्ष्यसि त्वमिति सधिवेलया
वर्तिकाभिरिव साधु मण्डिता ॥ ४५ ॥
सिहकेसरसटासु भूभृता
पल्लवप्रसविषु द्रुमेषु च ।
पश्य धातुशिखरेषु भानुना
सविभक्तमिव साध्यमातपम् ॥ ४६ ॥
पार्ष्णिमुक्तवसुधास्तपस्विन
पावनाम्बुरचिताञ्जलिक्रिया ।

43 *c* F यावदुत्थित, P 4 तावदुद्गत, P 2 यावदुद्गतं *d* T तावताच्यु—

44 *a* and *b* Va 2, T रवे पद धर्ममस्त— c F प्राक् तयेयमुदये पुरस्कृता, which is followed by Mallinatha

45 *c* F त्वमिति वलयानया, S—सध्ययानया, P 3, Bh G —साध्यवलया *d* Va 2, T वर्णिकाभिरिव—, F, P 2, G, P-4, Bh साधु वर्तिता (T = उत्पादिता Mallinatha), P 3 वर्णिताम्, P 2 वर्णिता

46 *a* Va 1—केशर—, F भूभृता प—(भूभृता अद्रिणा Mallinātha) *b* F —द्रुमेषु च *c* P-4—शिखरे विवस्वता, F, G —रेषु चात्मना, T चात्मन, Bh पश्य चास्तशिखरे विवस्वता

ब्रह्म गूढमभिसंध्यमादृता
शुद्धये विधिविदो गृणन्त्यमी ॥ ४७ ॥
तन्मुहूर्तमनुमन्तुमर्हसि
प्रस्तुताय नियमाय मामपि ।
त्वां विनोदनिपुणः सखीजनो
वल्गुवादिनि विनोदयिष्यति ॥ ४८ ॥
निर्विभुज्य दशनच्छदं ततो
वाचि भर्तुरवधीरणापरा ।
शैलराजतनया समीपगाम्
आललाप विजयामहेतुकम् ॥ ४९ ॥
ईश्वरोऽपि दिवसात्ययोचितं
मन्त्रपूर्वमनुतस्थिवान् विधिम् ।
पार्वतीमवचनामसूयया
प्रत्युपेत्य पुनराह सस्मितम् ॥ ५० ॥
मुञ्च कोपमनिमित्तकोपने
संध्यया प्रणमितोऽस्मि नान्यया ।
किं न वेत्सि सहधर्मचारिणं
चक्रवाकसमवृत्तिमात्मनः ॥ ५१ ॥
निर्मितेषु पितृषु स्वयंभुवा
या तनुः सुतनु पूर्वमुज्झिता ।

47 *b* Vā-2—स्वुविहिताञ्जलि—, P 2—स्वुमरसाञ्जलक्रिया *c* Bh संध्यम्, so Mallinatha *d* Vā-2, T सिद्धये
49 *a* P-3 निर्विभज्य— *d* T विजया सहेतु—
50 *b* T —मनुतष्ठिवान *d* T साऽभ्युपेत्य पुन—
51 *b* So Vā-1, Vā-2, P 1, P-3, P-4, T, Bh, S, F नान्यया; so Mallinatha—प्रकारान्तर न, P 2 सध्यया प्रणमतोऽस्मन्यया *c* T —सहनर्मचारिण *d* P-4—समवृत्त—

सेयमस्तमुदय च सेवते
तेन मानिनि ममात्र गौरवम् ॥ ५२ ॥
तामिमा तिमिरवृत्तिपीडिता
भूमिल स्वमिव सप्रति स्थिताम् ।
एकतस्तटतमालमालिनी
पश्य धातुरसनिम्नगामिव ॥ ५३ ॥
साध्यमस्तमितशेपमातप
रक्तरेखमपरा बिभर्ति दिक् ।
सपरायवसुधा सशोणित
मण्डलाग्रमिव तिर्यगुज्झितम् ॥ ५४ ॥
यामिनीदिवससधिसभवे
तेजसि व्यवहिते सुमेरुणा ।
एतदन्धतमस निरङ्कुश
दिक्षु दीर्घनयने विजृम्भते ॥ ५५ ॥

52 *b* So all MSS , Vā 1, Bh —मुत्थिता, cp Mallınātha on उज्झिता *c* So Vā 1, S , Bh., F —मस्तमुदये च सेव्यते, G —मस्तमुदय च सेव्यते, so explained by Mallınātha, cp 51 सध्यया प्रणमितोऽस्मि

53 *a* Vā-1, Bh , P-1, P-2, P-3—वृद्धिपी *b* So F. (=स्थूलीभूतमात्मतत्त्वमिव, or धूमिल स्व—?), T भूमिलग्नमिव सप्रतिष्ठिताम्, G , S , Bh भूमिलग्नमिव सप्रति स्थिताम्, followed by Mallınātha, S , however, has शैलराजतनयेऽधुना स्थिताम्, obviously a departure to avoid the difficult construction, cp VI, 8*b*

54 *b* So F , followed by Mallınātha , others—लेख *c* So Vā 1, T , G , सापराय S , but सपराय—in Mallınātha, F सापरायवसुधा न शोणित. *d* P 3 corrects मण्डलाग्र—into मण्डनाग्र—, so Vā-1, F , S , —गुत्थितम् T , G , Bh and Mallınātha, P-4—गूर्जितम्

55 *c* P-4 एतदेव तिमिर, Mallınātha—तपस निरर्गल *d* F. विजृम्भिते

नोर्ध्वमीक्षणगतिर्न चाप्यधो
नाभितो न पुरतो न पृष्ठत ।
लोक एष तिमिरोल्ववेष्टितो
गर्भवास इव वर्तते निशि ।। ५६ ।।

शुद्धमाविलमवस्थित चल
वक्रमार्जवगुणान्वित च यत् ।
सर्वमेव तमसा समीकृत
धिड महत्त्वमसता हृतान्तरम् ।। ५७ ।।

नूनमुन्नमति यज्वना पति
शार्वरस्य तमसो निषिद्धये ।
पुण्डरीकमुखि पूर्वदिङ्मुख
कैतकैरिव रजोभिरावृतम् ।। ५८ ।।

मन्दरान्तरितमूर्तिना निशा
लक्ष्यते शशभृता सतारका ।
त्व मया प्रियसखीभिरावृता
श्रोष्यतेव वचनानि पृष्ठत ।। ५९ ।।

रुद्धनिर्गमनमादिनक्षयात्
पूर्वदृष्टतनुचन्द्रिकास्मितम् ।

56 *b* F नाभिना न च पुरो न पृष्ठत *c* G लाक एव, F तिमिराल्पवे—, P 1, S तिमिरौघव—, śloka omitted by P 2

57 *a* F—ल्पमवस्थित— Bh—मवस्थित जल *d* F दिङ्‌ म—, so F, Va-1, G and Mallinatha T S हृतान्तरम्, P 1 —मसतामनन्तरम्, P 2 reads 57 after यामिनादिवस—55

58 *a* T उन्नयति, F—यज्वनोपति. *b* P-3 शारदस्य तमसा *c* and *d* So Va 1, S, G, T, Va 2—मुखि पश्य दिङ्मुख कैतकैरिव रजाभिरावृतम्, so Mallinatha F—मुखि पूर्वदिङ्मुख कैतकैरिव रजोभिरावृतम्, Bh.—मुखि दिङ्मुख पश्य

59 *c* So F, त्व मया प्रियसखीसमागता elsewhere *d* P-3 श्राप्यते च व—

एतदुद्गिरति रात्रिनोदिता
दिग् रहस्यमिव चन्द्रमण्डलम् ॥ ६० ॥
पश्य पक्वफलिनीफलत्विषा
बिम्बलाञ्छितवियत्सरोऽम्भसा ।
विप्रकृष्टविवर हिमांशुना
चक्रवाकमिथुन विडम्ब्यते ॥ ६१ ॥
शक्यमोषधिपतेर्नवोदया
कर्णपूररचनाकृते तव ।
अप्रगल्भयवसूचिकोमलाश्
छेत्तुमग्रनखसंपुटै करा ॥ ६२ ॥
अङ्गुलीभिरिव केशसंचय
संनिगृह्य तिमिर मरीचिभि
कुड्मलीकृतसरोजलोचन
चुम्बतीव रजनीमुख शशी ॥ ६३ ॥
पश्य पार्वति नवेन्दुरश्मिभि
सामिभिन्नतिमिर नभस्तलम् ।

60 *a* Va 1 पूर्वदृष्टमनु च— *c* and *d* So Vā 1, P 4, Bh and T so also F G, and Mallinātha except in रात्रिचोदिता, S, P 1 एतदुद्गिरति चन्द्रमण्डल दिग् रहस्यमिव रात्रिनोदितम्

61 *c* P 3 T —कृष्टविधुर, P 1—कृत्तविवर, cp 32 (अल्पमन्तरमनल्पता गतम्) and 39 (सावशेषविवर)

62 *a* F शक्यमापधिपतेर्नवोदया कर्ण—, rest as ours except भेत्तुम् for छत्तुम्, P 3, P 4—क्यमोप—, rest as ours T reads

शक्य ओपधिपतेर्नवोदय
कर्णपूररचनाकृते तव ।
अप्रगल्भयवसूचिकोमल्द्
छेत्तुमग्रनखसपुटै कर ॥

63 *b* F सरस्मिनिमिरमगृह्यरीचिभि ? *c* F —लोचने

लक्ष्यते द्विरदभोगदूषित
सम्प्रसीददिव मानस सर ॥ ६४ ॥
रक्तभावमपहाय चन्द्रमा
जात एष परिशुद्धमण्डल ।
विक्रिया न खलु कालदोषजा
निर्मलप्रकृतिषु स्थिरोदया ॥ ६५ ॥
उन्नतेषु शशिन प्रभा स्थिता
निम्नसंश्रयपर निशातम ।
नूनमात्मसदृशी प्रकल्पिता
वेधसेह गुणदोषयोर्गति ॥ ६६ ॥
चन्द्रपादजनितप्रवृत्तयश्
चन्द्रकान्तजलबिन्दवो गिरौ ।
मेखलातरुषु निद्रितानमून्
बोधयन्त्यसमये शिखण्डिन ॥ ६७ ॥

64 *b* So Vā-1, F, T, Va-2 भग्नमान्द्रतिमिर नभस्तलम् S भिन्न-मान्द्रतिमिर नभस्तलम्, Mallinātha agrees with ours except नभस्तलम्, so G Bh सविभिन्नतिमिर नभस्तलम् *c* So P-3, others—भोगदूषित—, cp 19 अलकचूर्णरूषितम् (=उपहतम Mallinātha) *d* Va-2, S, P 1, T सप्रसादमिव

65 *a* Va-2 रक्तभागम्—, śloka omitted by P 2

66 *c* F —सदृशा हि क— *d* P 1 वचना ह—, G, T वचसैव, F वचसा हि—

67 So Vā-1, F reads

चन्द्रपादजनितप्रवृत्तिभिर्
चन्द्रकान्तमणिबिन्दुभिर्गिरि ।
मखगतरुषु निद्रितानिमान्
बाधयत्यसमय शिखण्डिन ॥

So S, T with—जलबिन्दुभि—, so also Mallinatha with अमून् and—जलबिन्दु—

कल्पवृक्षशिखरेषु सम्प्रति
प्रस्फुरद्भिरविकल्पसुन्दरि ।
हारयष्टिगणनामिवांशुभि
र्कर्तुमागतकुतूहल शशी ॥ ६८ ॥
उन्नतावनतभागवत्तया
चन्द्रिका सतिमिरा गिरेरियम् ।
भक्तिभिर्बहुविधाभिरर्पिता
भाति भूतिरिव मत्तदन्तिन ॥ ६९ ॥
एतदुच्छ्वसितपीतमैन्दव
वोढुमक्षममिव प्रभारसम् ।
मुक्तषट्पदविरावमञ्जसा
भिद्यते कुमुदमा निबन्धनात् ॥ ७० ॥
पश्य कल्पतरुलम्बि शुभ्रया
ज्योत्स्नया जनितरूपसंशयम्
मारुते चलति चण्डि केवल
व्यज्यते विपरिवृत्तमंशुकम् ॥ ७१ ॥
शक्यमङ्गुलिभिरुद्धृतैरध
शाखिना पतितपुष्पपेशलै ।

68 *b* S, Bh प्रस्फुरद्भिरिव पश्य सुन्दरि *c* S —यष्टिरचनामि— *d* F, G, Bh, P 3—मुद्यतकुतू—

69 *a* P 1, S —भाववत्तया *b* F —का सुतिमिरा— *d* P 2, P 4, S मत्तहस्तिन

70 *a* F —सितवीतमैन्दव *b* F साढुम— *c* Va 1 भुवनपद्—, Vā 2 युक्तपद्—

71 *a* So F, others शुद्धया *b* F ज्योत्स्नया— *c* Vā 1 चरति, P 1 केवलाद्, T चण्डिके चल, S चण्डिके वगाद् We follow Vā-1, F, G and Mallinātha

पनसर्जरसशिप्रमाल्यैर्
एभिरुत्कचयितुं तवालकान् ॥ ७२ ॥
एष चारुमुखि योगतारया
युज्यते तरलबिम्बया शशी ।
साध्वसादुपगतप्रकम्पया
कन्ययेव नवदीक्षिता वरः ॥ ७३ ॥
पाकभिन्नशरकाण्डगौरयोर्
उल्लसत्प्रतिकृतिप्रसन्नयोः ।
रोहतीव तव गण्डलेखयोश्
चन्द्रबिम्बनिभिताक्षि चन्द्रिका ॥ ७४ ॥
लोहितार्कमणिभाजनार्पितं
कल्पवृक्षमधु बिभ्रती स्वयम् ।
त्वामियं स्थितिमतीमुपस्थिता
गन्धमादनवनाधिदेवता ॥ ७५ ॥
आर्द्रकेसरसुगन्धि ते मुखं
मत्तरक्तनयनं स्वभावतः ।

72 *a* S—र्यितुं— *b* T F—पुष्पकामलैः. *c* So F alone (—filtered through √*kar*?) others (with Mal.) पनजर— *d* Va 2, P-3, P-4 T तवालकम् F, Bh तवालका.
73 *a* F एष तारमुखि योगतारया, P-4 एष चन्द्रमुखि यागतारया, Va 2, T एष चारुमुखि पश्य तारया, P 1 P-3, S—योगतारया, P 2 —यागितारया *d* F नवदीक्षितादर · P-4, Va 2 P 1, P 2, P-3, S, G, Bh., Mallinātha—दीक्षितो वरः.
74 *a* T पाकपाण्डुर— *b* F अल्लसत्प्रति—, P-3—कृतिप्रसन्नया, F, G—कृतिप्रदीप्तया, S—कृतिप्रसादया, Bh—प्रतिकृति प्रसन्नयो. *c* F राहतीवशनीव ण्डलेखया. *d* So F alone Va 1, Mallinatha, G, T, Bh.—निहिताक्षि , S—निहिताक्षि, so P 1, P-4
75 *b* F बिभ्रति *c* S, Bh.—मतीमुपागता, P 1—मतीं समागता

अत्र लब्धवसतिर्गुणान्तर
कि विलासिनि मद करिष्यति ॥ ७६ ॥
मान्यभक्तिरथवा सखीजन
सेव्यतामिदमनङ्गदीपनम् ।
इत्युदारमभिधाय शकरस्
तामपाययत पानमम्बिकाम् ॥ ७७ ॥
पार्वती तदुपभोगसभवा
विक्रियामपि सती मनोभवाम् ।
अप्रतर्क्यविधियोगनिर्मिताम्
आम्रतेव सहकारता ययौ ॥ ७८ ॥
तत्क्षण विपरिवर्तितह्रियोर्
शिक्षतो शयनमिद्धरागयो ।
सा बभूव वशवर्तिनी द्वयो
शूलिन सुवदना मदस्य च ॥ ७९ ॥

76 *a* P 4 पद्मकेसर—, T आर्द्रकेशर— *b* P 3 रक्तमत्तनयन, T रक्तमेव न— P 4, G, Bh प्रा तरक्तनयन, F मत्तमत्तनयन; cp प्रस्फारितोन्नम्रविनम्रकण्ठ, IX, 9, repetition for emphasis *d* G, Mallinatha क विलासिनि मधु करि—, F कि विलासिनि मनु करि—

77 *a* F मानभक्ति— *b* F सेदृता— *d* F —मम्बिका

78 *a* T, F, G, S —पयोग— *b* F, S, G, Vā 2 P 1, P 3, P 4, Bh मनोहराम् *c* F अप्रतर्क्यविधियोगकारिताम् recording अप्रतर्क्यविनियोगकारिता and अप्रतर्क्यजिनियोगनिर्मिताम् T reads (*c* and *d*)

अप्रतर्क्यविधियोगनिर्मिता
नम्रनेव सहकारिता ययौ ॥

A good reading, adopted in Mallinātha with सहकारता

79 *a* P 1—परिवृत्तलज्जयो, T तत्क्षणे विपरिवर्तितह्रियो, F तत्क्षण विपरिवर्तिह्रिययो *b* F शिष्यतो शयन—, T वाञ्छता शयन—, others नेष्यतो *d* T, G प्रेयम मु—

घूर्णमाननयनं स्खलत्कथं
स्वेदबिन्दुमदकारणस्मितम् ।
आननेन न तु तावदीश्वरश्
चक्षुषा चिरमुमामुखं पपौ ॥ ८० ॥

तां विलम्बितपनीयमेखलाम्
उद्वहन् जघनभारदुर्वहाम् ।
ध्यानमत्रविभूतिसम्भृत
प्राविशन् मणिशिलागृहं हरः ॥ ८१ ॥

तत्र हंसधवलोत्तरच्छदं
जाह्नवीपुलिनचारुदर्शनम् ।
अध्यशेत शयनं प्रियासखः
शारदाभ्रमिव रोहिणीपतिः ॥ ८२ ॥

क्लिष्टकेशममिलुप्तचन्दनम्
व्युत्ययार्पितनखं समत्सरम् ।
तस्य तच्छिदुरमेखलागुणं
पार्वतीरतमभून्न तृप्तये ॥ ८३ ॥

80 *a* So Bh alone, G, S स्खलत्कथ, Vā-2, P 1 स्खलद्वचः; cp. 68.

81 *c* So F, Vā-1 ध्याननूनविभूतिरीश्वरः, T ध्यानसंभृतिविभूति शालिन, Bh., S ध्याननूनविभूतिरीश्वरः with which agree P-2, P-3, P-4, G, Mallinātha ध्याननूनविभूतिसम्भृत (= ध्यान न्यूनता सत्स्वभावनिष्ठया विभूत्या भोगसाधनेन सम्भृत सम्पूर्णम्) *d* रहः P 3, P-4, P 1, S, Bh, P-2 तत्र. *c* and *d* Of this śloka and *a* and *b* of 82 are omitted by Vā-2

83 *a* and *b* So Vā-1, T, S क्लिष्टकेशमवलुप्तचन्दनं व्यत्ययार्पितनखं समत्सरम् So P-3, P-4, F, G क्लिष्टकल्पमदनं व्यत्ययार्पितनखं समत्सरम्, so Mallinātha, P-2—मविलुप्तचन्दनं (—मविलुप्तचन्दन ? as ours), so P-3, Bh, Vā-1 व्यत्ययार्पित—; P-4 व्युत्ययार्पितनखं *d* F—रतमभून्न तृप्तये, P 3, G, Bh. मभून्न तृप्तये

केवल प्रियतमादयालुना
ज्योतिषामवनतासु पङ्क्तिषु ।
तेन तत्परिगृहीतवक्षसा
नेत्रमीलनकुतूहल कृतम् ॥ ८४ ॥
स व्यबुध्यत बुधस्तवोचित
शातकुम्भकमलाकरै समम् ।
मूर्छनापरिगृहीतकैशिके
किनरैरुषसि गीतमङ्गल ॥ ८५ ॥
तौ क्षण शिथिलितोपगूहनौ
दपती रचितमानसोर्मय ।
पद्मभेदपिशुना सिषेविरे
गन्धमादनवनान्तमारुता ॥ ८६ ॥
ऊरुमूलनखमार्गराजिभिस्
तत्क्षण हृतविलोचनो हर ।
वासस प्रशिथिलस्य सयम
कुर्वती प्रियतमामवारयत् ॥ ८७ ॥
स प्रजागरकषायलोचन
गाढदन्तपदपीडिताधरम् ।

84 *a* F केवलप्रिय— *c* S प्रनिगृहीत—

85 *a* F वुधस्तपोचित , Vā 2, T —घ्यत तया निशाक्षये *b* T —कमलाकर *c* T —गृहीतवशिकै , P 3—गृहीतकेशकै , P 4 —गृहीतमानसै , Bh मूर्छनापरिगृहीतकैशकै *d* F समुपगीतमगल

86 *a* F शिदिलि—, Vā 2 प्रशिथिलोपगू— *b* So majority, P 2, P 3, Bh चलितमा— *c* F पद्मबोधनिपुणा , G पद्मभेदनिपुणा *d* With गन्धमादन Vā 1, the basis of our text ends, henceforth Vā 2 has been our basis

87 *a* F —मार्गराजभि , P 2 ऊरुल्ननख—जिभि *c* F, प्रसिदिलस्य, so P 1, P 2, P 3, P 4, Bh , S , G , F , Vā 1 सचय

आकुलालकमरंस्त रञ्जयन्
प्रेक्ष्य भिन्नतिलकं प्रियामुखम् ॥ ८८ ॥
तेन भङ्गिविषमोत्तरच्छदं
मध्यपिण्डितविसूत्रमेखलम् ।
निर्मलेऽपि शयनं निशात्यये
नोज्झितं चरणरागलाञ्छितम् ॥ ८९ ॥
स प्रियामुखरसं दिवानिशं
हर्षवृद्धिजननं सिषेविषुः ।
दर्शनप्रणयिनामदृश्यताम्
आजगाम विजयानिवेदितः ॥ ९० ॥
समदिवसनिशीथं सङ्गिनस्तत्र शंभोः
शतमगमदृतूनां साग्रमेका निशेव ।
न तु सुरतसुखेभ्यश्छिन्नतृष्णो बभूव
ज्वलन इव समुद्रान्तर्गतस्तज्जलौघैः ॥ ९१ ॥

इति श्रीकुमारसंभवे महाकाव्ये कविकालिदासकृतौ शिवयोः संभोगवर्णनं नामाष्टमः सर्गः ॥

88 *a* F न प्रजागरकषायलोचना, F, T, Bh गाढदन्तपदताडिताधरम्, P-1 गाढदन्तपरिताडि—, P-4 —दन्तपरिपीडिताधरम् *c* P 2, Bh —लकमपास्तचित्रक (प्रेक्ष्य), so F In P 2 and Bh verb is wanting, note स in this śloka and तेन in 89

89 *a* So Bh, Vā 2, F, P-2 भङ्गवि—, T, S भिन्नवि— *b* Vā 2 मध्यपीडित, P-4 मध्यमण्डितविनम्रमेखलम्

90 *a* So Bh alone, others प्रियामुखरसं *b* F निषेविषुः *d* S, Bh —निवेदनात्

91 *b* So Vā 2, S (मात्र किञ्चिन्मात्रिकमव्ययम्), others सार्धम् (with Mallinātha) *c* F न च सुरतसुखैश्च, Bh न च सुरतसुखेषु *d* So F, G, S, Mallinātha, Vā 1, Bh तज्जलेषु, T तज्जलेभ्यः

Colophon After this P-4 has पार्वतीसंभोगवर्णनो नामाष्टमः सर्गः ।

अथो शिवश्चन्द्रसुचारुमौलि
मस्मार तन्नामरशिल्पिराजम् ।
चिकीर्षयागारवरस्य विष्णुर्
माया तु समारसिसृक्षयेव ॥

सवत् । ६७५ वर्षे माघमासे कृष्णपक्षे रुद्रातिथौ काव्यवासरे। भट्टारक श्रीदेवेन्द्रकीर्तिजी तत्सिषि नारायणदामस्वमेव लिखापित। लिखितं लेखक मा० जोवाग्राम वनहटामध्ये लिपि। श्रीरस्तु। कल्याणमस्तु, P2 हरसभोग वर्णनोष्टम । सपूर्णमिति। ८ । सवत् । ६४० वर्षे पौपसुदि १४ बृहस्पतिवासरे। लिप्यते पुरनमल काईस्थमाथुरेण। लिखाईत भटविश्रामजी आत्मपठनार्थम् । शुभमस्तु भवेत्; P agrees with Vā 2 P-1 शिवपार्वतीसुरतक्रीडावर्णन नाम , S, Bh उमासुरतवर्णन , G हरविहारो नाम , Mallinātha उमासुरतवर्णन नामाष्टम सर्ग , F इति श्रीकालिदासस्य कृतौ कुमारसभवे महाकाव्ये अष्टम सर्ग । करकृतमपराध क्षन्तुमर्हन्ति सन्त । श्रीरामचन्द्राय मङ्गलम्। श्रीसाम्बशिवार्पणमस्तु।

## ॥ नवमः सर्गः ॥

तथाविधेऽनङ्गरसप्रसङ्गे
मुखारविन्दे मधुपः प्रियायाः ।
सम्भोगवेश्म प्रविशन्तमन्तर्
ददर्श पारावतमेकमीशः ॥ १ ॥
सुकान्तकान्तामणितानुकारं
कूजन्तमाघूर्णितरक्तनेत्रम् ।
प्रस्फारितोन्नम्रविनम्रकण्ठं
मुहुर्मुहुर्न्यञ्चितचारुपुच्छम् ॥ २ ॥
विशृङ्खलं पक्षतियुग्ममीषद्
दधानमानन्दगति मदेन ।
शुभ्रांशुवर्णं जटिलाग्रपादम्
इतस्ततो मण्डलकैश्चरन्तम् ॥ ३ ॥
रतिद्वितीयेन मनोभवेन
ह्रदात् सुधायाः प्रविगाह्यमानात् ।
तं वीक्ष्य फेनस्य चयं नवोत्थम्
इवाभ्यनन्दत् क्षणमिन्दुमौलिः ॥ ४ ॥
तस्याकृतिं कामपि वीक्ष्य दिव्याम्
अन्तर्भवच्छद्मविहङ्गमस्य ।
विचिन्तयन् संविविदे स देवो
भ्रूभङ्गभीमश्च रुषा बभूव ॥ ५ ॥

2. *c* Cp VIII, 76 मत्तमत्तनयन in F *d* T —मुहुर्नर्निचार—, so Vā-2, Bh
3. *b* T, V यानन्दगत *d* G, S, T, V —न्कैश्चर—, so Bh
4. *b* So all the MSS, note preference for ह्रदात् to निगाह् with reference to I-1
5. *a* T तदाकृति *b* So S, others —भवच्छद्म—

स्वरूपमास्थाय ततो हुताश
श्वासस्खलत्कण्ठकृताञ्जलि सन् ।
प्रवेपमानो नितरा स्मरारिम्
इद वचो व्यक्तमथाभ्युवाच ॥ ६ ॥

असि त्वमेको जगतामधीश
स्वर्गौकसा त्व विपदो निहसि ।
अत सुरेन्द्रप्रमुखा प्रभो त्वाम्
उपासते दैत्यवरैर्विधूता ॥ ७ ॥

त्वया प्रियाप्रेमवशवदेन
शत व्यतीयेऽत्रभवन्नृतूनाम् ।
बहि स्थितोऽपि त्वदवीक्षणार्तो
दैन्य पर प्राप सुरै सुरेन्द्र ॥ ८ ॥

त्वदीयसेवावसरप्रतीक्षैर्
अभ्यर्थित शक्रमुखै सुरैस्त्वाम् ।
उपागतोऽन्वेष्टुमह विहग-
रूपेण विद्वन्त्समयोचितेन ॥ ९ ॥

इति प्रभो चेतसि सप्रधार्य
त नोऽपराध भगवन् क्षमस्व ।
पराभिभूता वद कि क्षमन्ते
कालातिपात शरणार्थिनोऽमी ॥ १० ॥

6 *b* So Bh *alone*, T, V श्रामस्खलत्कम्प्रकृताञ्जलि सन्, S स्खलन् वलत्कम्पकृताञ्जलि सन् (comm वलनुद्भवन् कम्पो यथा तथा), Va 2 श्रमन् स्खलत्कम्प्रकृताञ्जलि सन्, T, V1—मानोऽतितरा
*d* So T, V1, Va 2, S, G, Bh—थाभ्युवाच
8 *b* So T, V, —व्यतीये सुरतादृतूनाम् Va 2 S, G, Bh
*c* So Va 2, G वहि स्थितेन त्वदवीक्षणार्तो, S, Bh रह स्थितेन त्वदवीक्षणार्तो, T, V रह स्थितेन त्वदवीक्षणेन
9 *d* Va 2 विद्वत्समयो—
10 *b* Bh ममापराध—

प्रभो प्रसीदाय मृजात्मपुत्र
य प्राप्य सेनान्यमसौ सुरेन्द्र ।
स्वर्लोकलक्ष्मीप्रभुतामवाप्य
जगत्त्रय पाति तव प्रसादात् ॥ ११ ॥
स शंकरस्तामिति जातवेदो-
विज्ञापनामर्थकरी निशम्य ।
अभूत् प्रसन्न परितोषयन्ति
गीर्भिर्गिरीशा रुचिराभिरीशम् ॥ १२ ॥
प्रसन्नचेता मदनान्तकारी
स तारकारेर्जयिनो भवाय ।
शतस्य सेनाधिपतेर्जयाय
व्यचिन्तयच्चेतसि भावि किंचित् ॥ १३ ॥
युगान्तकालाग्निमिवाविषह्य
परिच्युत मन्मथरङ्गभङ्गात् ।
रतान्तरेत स हिरण्यरेतस्य्
अथोर्ध्वरेतास्तदमोघमाधात् ॥ १४ ॥
अत्युष्णवाष्पानिलदूषितान्तर्
विशुद्धमादर्शमिवात्मदेहम् ।
बभार भूम्ना सहसा पुरारि-
रेत परिक्षेपकुवर्णमग्नि ॥ १५ ॥
त्व सर्वभक्षो भव भीमकर्मा
कुष्ठाभिभूतोऽनल धूमगर्भ ।

11 a So Bh , so T , V1 except in मृजात्, Va 2 प्रभो प्रसीदात् मृजस्व पुत्र, G , S—दात् मृजात्मपुत्र c T , V स्वर्गेन्द्र—, Bh स्वर्लोकलक्ष्मीप्रभुतामुपेत्य

12 b T , V , Bh अर्थवती

13 a So Va 2, Bh and others—न्तकार

15 a So Va 2 , T , V अथोष्णवाष्पानिलदूषितान्त, G अथोष्ण वाष्पानलदूषितान्तर्—, Bh अथोष्मवाष्पानलदूषितान्तर् d Bh रेत परिक्षिप्तकुवर्ण—

16 d T , V1 तथा रता—

इत्थं शशापाद्रिसुता हुताशं
रुष्टा रतानन्दसुखस्य भङ्गात् ॥ १६ ॥

दक्षस्य शापेन शशी क्षयीव
प्लुष्टो हिमेनेव सरोजकोशः ।
वहन् विरूपं वपुरुग्ररेखा-
चयेन वह्निः किल निर्जगाम ॥ १७ ॥

स पावकालोकरुषा विलक्षां
स्मरत्रपास्मेरविनम्रवक्त्राम् ।
विनोदयामास नगेन्द्रपुत्रीं
शृङ्गारगर्भैर्मधुरैर्वचोभिः ॥ १८ ॥

हरो विकीर्णं घनघर्मतोयैर्
नेत्राञ्जनाङ्कं सदयं प्रियायाः ।
द्वितीयकौपीनचलाञ्चलेना-
हरन् मुखेन्दोरकलङ्किनोऽस्याः ॥ १९ ॥

मन्देन स्विन्नाङ्गुलिना करेण
प्रेम्णा तस्या वदनारविन्दात् ।
परामृशन् घर्मजलं जहार
हरः सहेलं व्यजनानिलेन ॥ २० ॥

रतिश्लथं तत्कबरीकलापम्
असावसक्तं विगलत्प्रसूनम् ।
स पारिजातोद्भवपुष्पमय्या
स्रजा बबन्धामृतमूर्तिमौलिः ॥ २१ ॥

17 *a* T शशी क्षयाय S, V, G agree with ours *b* T, V₁ प्लुष्टो हिमेनेव—

18 *a* T, V पावकालोकनता— *c* S, T, V₁, Bh गिरीन्द्रपुत्री

19 *b* So T, V₁, others हृदयप्रि— *d* T, V₁ (—न) हरन्मुखेन्दो—, Bh —रकलङ्किनोपि

20 *b* G प्रेम्णा च

कपोलपाल्या मृगनाभिचित्र-
पत्रावलीमिन्दुमुख सुमुख्या ।
स्मरस्य सिद्धस्य जगद्विमोह-
मन्त्राक्षरश्रेणिमिवोल्लिलेख ॥ २२ ॥
रथस्य कर्णाविति तन्मुखस्य
ताटङ्कचक्रद्वितय न्यधात् स ।
जगज्जिगीषुर्विषमेषुरेष
ध्रुव यमारोहति पुष्पचाप ॥ २३ ॥
तस्या स कण्ठे पिहितस्तनाग्रा
न्यधत्त मुक्ताफलहारवल्लीम् ।
या प्राप मेरुद्वितयस्य मूर्ध्नि
स्थितस्य गङ्गौघयुगस्य लक्ष्मीम् ॥ २४ ॥
नखव्रणश्रेणिधरे बबन्ध
नितम्बबिम्बे रशनाकलापम् ।
चलत्स्वचेतोमृगबन्धनाय
मनोभुव पाशमिव स्मरारि ॥ २५ ॥
भालेक्षणाग्नौ स्वयमञ्जन स
भङ्क्त्वा दृशो साधु निवेश्य तस्या ।
नवोत्पलाक्ष्या पुलकोपगूढे
कण्ठे विनीलेऽङ्गुलिमुज्जघर्ष ॥ २६ ॥

23 *a* Bh रथस्य कर्णाविति मुखस्य, T तन्मनस्य, G कर्णाविति मु— *b* G, Bh. व्यधात्—

24 *a* T, V1 कण्ठेऽपिधनस्तन या, Bh कण्ठेऽपि घनस्तनाग्र *c* T, V1 सा प्राप— *d* S गाङ्गौघ, but comm गङ्गाया वाघयो प्रवाहयोर्युगस्य

25 *a* Vā-2 नखव्रणश्रेणिवरे— *b* T, V रसना— *c* So majority, T, V चलच्च— *d* T मनोभव, all others मनोभुव

26 So Va-2, G, S, न्यक्त्वा T, V1 (note use of √*bhañj* in this sense, *see also* XII, 60*b*—भञ्जनम्) *c* Bh, T, V1 पुलकावगूढ— *d* So T, G, S, V1, Bh, Vā-2 विलीनाङ्गुलि—

अल्क्तक पादसरोरुहाग्रे
सरोरुहाक्ष्या किल सनिवेश्य ।
*स्वमौलिगङ्गासलिलेन हस्ता-*
रुणत्वमक्षालयदिन्दुचूड ।। २७ ।।
भस्मानुलिप्ते वपुषि स्वकीये
सहेलमादर्शतल विमृज्य ।
नेपथ्यलक्ष्मीपरिभावनार्थम्
अदर्शयज्जीवितवल्लभा स ।। २८ ।।
प्रियेण दत्ते मणिदर्पणे सा
सभोगचिह्न स्ववपुर्विभाव्य ।
नपावती तत्र घनानुराग
*रोमाञ्चदम्भेन बहिर्बभार ।। २९ ।।*
नेपथ्यलक्ष्मी दयितोपक्लृप्ता
सस्मेरमादर्शतले विलोक्य ।
अमस्त सौभाग्यवतीषु धुर्यम्
आत्मानमुद्भूतविलक्षभावा ।। ३० ।।
अन्त प्रविश्यावसरेऽथ तत्र
स्निग्धे वयस्ये विजया जया च ।
सुमपदोपाचरता कलानाम्
अङ्कस्थिता ता शशिखण्डमौले ।। ३१ ।।

27 *d* T, $V_1$ —इन्दुमौलि
28 *c* G, S, Bh —लक्ष्म्या परि—
29 *a* T $V_1$ —दर्पण च *b* $V_1$ सयोग— *c* Va 2—वतीमत्र, cp Rv XIX, 28
30 *c* So G, Va-2 T, $V_1$, S नुर्या—, cp X, 53*c* *d* T, $V_1$ *उद्भूतविस्मयता सा, Bh उद्भूतवि—*
31 *c* G, Bh स्वसपदो— T, $V_1$ उमा तदोपाचरता कलाभा *d* $V_1$ दूरे स्थिता तां, T दुरे स्थिता तां

व्यधुर्वहिर्मङ्गलगानमुच्चैर्
वैतालिकाश्चित्रचरित्रचारु ।
जगुश्च गन्धर्वगणा सशङ्ख-
स्वन प्रमोदाय पिनाकपाणे ॥ ३२ ॥

तत स्वसेवावसरे सुराणा
गणान्तदालोकनतत्पराणाम् ।
द्वारि प्रविश्य प्रणतोऽथ नन्दी
निवेदयामास कृताञ्जलि सन् ॥ ३३ ॥

महेश्वरो मानसराजहंसी
करे दधानस्तनया हिमाद्रे ।
सभोगलीलालसित सहेल
हरो बहिस्तानभि निर्जगाम ॥ ३४ ॥

क्रमान् महेन्द्रप्रमुखा प्रणेमु
शिरोनिबद्धाञ्जलयो महेशम् ।
प्रालेयशैलाधिपतेस्तनूजा
देवी च लोकत्रयमातर ताम् ॥ ३५ ॥

यथागत तान् विबुधान् विसृज्य
प्रसाद्य मानक्रियया प्रतस्थे ।
स नन्दिना दत्तभुजोऽधिरुह्य
वृष वृषाङ्क सह शैलपुत्र्या ॥ ३६ ॥

मनोऽतिवेगेन ककुद्मता स
प्रतिष्ठमानो गगनाध्वनोऽन्ते ।

32 *b* T, Vi चित्रितचारुवेद्याम् *d* T, Vi —शङ्खध्वनि (=ध्वनि ? adverbial)
34 *d* T, Vi हसन् बहि—
35 *b* Bh, G गिरीशम् *d* So G, Bh, others ते
36 *b* G, Bh प्रसाद्यमान क्रि—, T, Vi प्रसादमानक्रियया
37 *b* Bh गगनाध्वनीन, rest as ours, T, Vi read

मनोऽनिवेगेन ककुद्मता स
प्रतिष्ठमानो गगनाध्वनीन ।

वैमानिकैः साञ्जलिभिर्ववन्दे
विहारहेलागतिभिर्गिरीश ॥ ३७ ॥
स्वर्वाहिनीवारिविहारचारी
रतान्तनारीश्रमशान्तिकारी ।
तौ पारिजातप्रसवप्रसङ्गो
मरुत् सिषेवे गिरिजागिरीशौ ॥ ३८ ॥
पिनाकिनापि स्फटिकाचलेन्द्र
कैलासनामा कलिताम्बराश ।
धृतार्धसोमोऽद्भुतभोगिभोगो
विभूतिधारी स्व इव प्रपेदे ॥ ३९ ॥
विलोक्य यत्र स्फटिकस्य भित्तौ
सिद्धाङ्गना स्व प्रतिबिम्बमारात् ।
भ्रान्त्या परस्या विमुखीभवन्ति
प्रियेषु मानग्रहिला नमस्तु ॥ ४० ॥
सुबिम्बितस्य स्फटिकांशुगुप्तेश्
चन्द्रस्य चिह्नप्रकर करोति ।
गौर्यार्पितस्येव रसेन यत्र
कस्तूरिकाया शकलस्य लीलाम् ॥ ४१ ॥

तौ पारिजातप्रसवप्रसङ्गो
मरुत् सिषेवे गिरिजागिरीशौ ॥

The two omit *c* and *d* of 37 and *a* and *b* of 38 *b* G प्रतिष्ठमानो गगनाध्वनीन S प्रतिष्ठमानो गगनाध्वगोऽन्त Rest as ours in both

39 *b* So Bh, G, others—म्वराश, T, V1—म्वराम *c* T, V1 भृतभोगिभोगो

40 *b* Bh—स्वप्रति— *c* T, V1—परस्याभिमुखी— *d* Bh, G मन मु

41 *d* G, V1, T, Bh कस्तूरिकास्यासकुलस्यलीलाम्

यदीयभित्तौ प्रतिबिम्बिताङ्गम्
आत्मानमालोक्य रुषा करीन्द्राः ।
मत्तान्यकुम्भिभ्रमतोऽतिभीम-
दन्ताभिघातव्यसनं वहन्ति ॥ ४२ ॥
निशासु यत्र प्रतिबिम्बितानि
ताराकुलानि स्फटिकालयेषु ।
दृष्ट्वा रतान्तच्युतहारमुक्ता-
भ्रमं बिभ्रति सिद्धवध्वः ॥ ४३ ॥
नभश्चरीमण्डनदर्पणश्री
सुधानिधिर्मूर्धनि यस्य तिष्ठन् ।
अनर्घ्यचूडामणितामुपैति
शैलाधिराजस्य शिवालयस्य ॥ ४४ ॥
समीपिवासा रहसि स्मरार्ता
रिरंसवो यत्र सुराः प्रियाभिः ।
एकाकिनोऽपि प्रतिबिम्बभाजो
बिभ्यति भूयोभिरिवान्विता स्वैः ॥ ४५ ॥
देवोऽपि गौर्या सह चन्द्रमौलिर्
यदृच्छया स्फटिकशैलशृङ्गे ।
शृङ्गारचेष्टाभिरनारताभिर्
मनोहराभिर्व्यहरच्चिराय ॥ ४६ ॥
देवस्य तस्य स्मरसूदनस्य
हस्तं समालम्ब्य सुविभ्रमश्रीः ।
सा नन्दिना वेत्रभृतापदिष्ट-
मार्गा पुरोगेण किल चचाल ॥ ४७ ॥

42 c T, V1 मत्तान्यनाग—
43 c G रतान्त च्युत—
45 d G, S, V1 T, Bh—भिरिवान्विता स्वैः
46 a T V1 दिव्योऽपि
47 b So G, V1 T, Bh, others समालिङ्ग्य c G —भृतापदिष्ट मार्गे पुरोगे, T, V1, Bh पुरोगेन

चलच्छिखाग्रो विकटाङ्गभङ्ग
सुदन्तुर शुक्लसुतीक्ष्णतुण्ड ।
भ्रुवोपदिष्ट स हि शकरेण
तस्या विनोदाय ननर्त भृङ्गी ॥ ४८ ॥
कण्ठस्थलीलोलकपालमाला
दंष्ट्राकरालाननमभ्यनृत्यत् ।
प्रीतेन तेन प्रभुणा प्रणुन्ना
काली कलत्रस्य मुदे प्रियस्य ॥ ४९ ॥
भयकरौ तौ विकट नटन्तौ
विलोक्य बाला भयविह्वलाङ्गी ।
सरङ्गमुत्सङ्गमनङ्गशत्रोर्
गाढ प्रसह्य स्वयमालिलिङ्ग ॥ ५० ॥
उत्तुङ्गपीनस्तनपीडपीड
ससभ्रम तत्परिरम्भमीश ।
प्रपद्य सद्य पुलकोपगूढ
स्मरेण रूढप्रमदो ममाद ॥ ५१ ॥
इति गिरितनुजाविलासलीला-
विविधविभङ्गिभिरेप तोपित सन् ।
अमृतकरशिरोमणिर्गिरीन्द्रे
कृतवसतिर्वशिभिर्गणैर्ननन्द ॥ ५२ ॥

**इति श्रीकुमारसम्भवे महाकाव्ये कविकालिदासकृतौ कैलासगमन नाम नवमः सर्गः ॥**

48 *a* and *b* T, V1 चलद्विपाणो विकटाङ्गभङ्ग स दन्तुर शुक्लसुतीक्ष्ण-तुण्ड *b* So Vā-2, S, G, Bh, others न दन्तुर *c* T, V1, G, Bh, S —म तु श—

49 *c* S, Vā 2 नियुक्ता

50 *a* Vā 2, S नदत्तौ *c* Bh सुरङ्गामु—

51. *a* Va 2 S —पीनस्तनपिण्डपीड

52 *a* G, T, V1, Bh इति गिरिसुतया वि—

Colophon G, Bh कैलासगमन नाम—, T कैलासगमना नाम—, V1, S कैलासगमो नाम—

## ॥ दशमः सर्गः ॥

आससाद शुनासीरं सदसि त्रिदशैः सह ।
एष त्रैयम्बकं तीव्रं वहन् वह्निर्महन्महः ॥ १ ॥
सहस्रेण दृशामीशो द्युपदां सोऽतिसादरम् ।
दुर्दर्शनं ददर्शाग्निं धूम्रधूमिलमण्डलम् ॥ २ ॥
दृष्ट्वा तथाविधं वह्निमिन्द्रः क्षुब्धेन चेतसा ।
व्यचिन्तयच्चिरं किंचित् कदर्पद्वेषिरोषजम् ॥ ३ ॥
स विलक्ष्यमुखैर्देवैर्वीक्ष्यमाणः क्षणं क्षणम् ।
उपाविशत् सुरेन्द्रेणादिष्टं सादरमासनम् ॥ ४ ॥
हव्यवाह त्वयासादि दुर्दर्शेयं दशा कुतः ।
इति पृष्टः सुरेन्द्रेण स निःश्वस्य वचोऽवदत् ॥ ५ ॥
अनतिक्रमणीयात्ते शासनात् सुरनायक ।
पारावतं वपुः प्राप्य वेपमानोऽतिसाध्वसात् ॥ ६ ॥
अभिगौरि रतासक्तं जगामाहं महेश्वरम् ।
कान्त्येव स्मराराते स्वं रूपमहमासदम् ॥ ७ ॥

1 a S, T, Bh सुनासीर— c T, V1 गत्वा त्रैयम्बक
2 a and b So G, T, V1, S, Va 2—मीशः कुलिशाङ्क च सा— but cp दुर्दर्शन d So Va 2, Bh, G, others धूम्रधूमित—
3 b G, Bh क्रुद्धेन
4 a Bh, G विलक्षमु—, T, V1 सवज्ज्रमुखैर्देवै-
5 b S दुर्दर्शा दशा, G, Bh सुदुर्दर्शा दशा, T, V1 सुमहादुर्दशा
T, V1, G, Bh have the order

अनतिक्रमणीयात्त शासनात् सुरनायक ।
जगामौरीरतासक्त (G, Bh अभि गौ—) जगामाहं महेश्वरम् ॥
पारावतं वपुः प्राप्य वपमानोऽतिसाध्वसात् ।
कान्त्येव स्मराराते स्वं रूपमहमासदम् ॥

7 a So S, Va 2, Bh अभिगौरी (comm गौर्यामित्यभिगौरि)

दृष्ट्वा छद्मविहग मा सुज्ञो विज्ञाय जम्भभित् ।
ज्वलज्ज्वालानले होतु कोपनो माममन्यत ।। ८ ।।
वचोभिर्मधुरै सान्त्वैर्विनम्रेण मया स्तुत ।
प्रीतिमानभवद्देव स्तोत्र कस्य न तुष्टये ।। ९ ।।
शरण्य सकलत्राता मामत्रायत शकर ।
क्रोधाग्नेर्ज्वलतो ग्रासत्रासतो दुर्निवारत ।। १० ।।
परिहृत्य परीरम्भ रभसाद् दुहितुर्गिरे ।
कामकेलिरसोत्सेकाद् व्रीडया विरराम स ।। ११ ।।
रङ्गभङ्गच्युत रेतस्तदमोघ सुदुर्वहम् ।
त्रिजगद्दाहक सद्यो मद्विग्रहमधि न्यधात् ।। १२ ।।
दुर्विपह्येण तेनाह तेजसा दहनात्मना ।
निर्दग्धमात्मनो देह दुर्वह वोढुमक्षम ।। १३ ।।
रौद्रेण दह्यमानस्य महसातिमहीयसा ।
मम प्राणपरित्राणप्रगुणो भव वासव ।। १४ ।।
इति श्रुत्वा वचो वह्ने परितापोपशान्तये ।
हेतु विचिन्तयामास मनसा विबुधेश्वर ।। १५ ।।
तेजोदग्धानि गात्राणि पाणिनास्य परामृशन् ।
किंचित् कृपीटयोनि त दिवस्पतिरभाषत ।। १६ ।।
प्रीत स्वाहास्वधाहन्तकारै प्रीणयसे स्वयम् ।
देवान् पितॄन्मनुष्यास्त्वमेकस्तेषा मुख यत ।। १७ ।।

8 *b* Bh, G यज्ञभित्, V1, T ज्ञानभृत् *d* V1, T कोपतोऽयममन्यत, G, Bh कोपता मामलोन्यत्
9 *a* Va 2, S सार्यै
10 *c* So Bh, G, T, V1, Va 2, S ग्रासात् त्रासतो—
11 *a* So G, Bh, others परीरम्भ रभस
12 *b* So Va 2, S, G, T, V1 —तदमोघ सुदुर्वहम् *d* Bh —ह्मधि न्यधात्
13 *a* Bh दुर्विषह्येन

त्वयि जुह्वति होतारो हवींषि ध्वस्तकल्मषा ।
भुञ्जन्ति स्वर्गमेवस् त्व स्वर्गप्राप्तौ हि कारणम् ॥ १८ ॥
हवींषि मन्त्रपूतानि हुताग्न त्वयि जुह्वत ।
तपस्विनस्तप सिद्धि यान्ति त्व तपसा प्रभु ॥ १९ ॥
निधत्से हुतमर्काय स पर्जन्योऽभिवर्षति ।
ततोऽन्नानि प्रजास्तेभ्यस्तेनासि जगत पिता ॥ २० ॥
अन्तश्चरसि भूताना तानि त्वत्तो भवन्ति च ।
ततो जीवितभूतस्त्व जगत प्राणदाऽसि च ॥ २१ ॥
अमीषा सुरसघाना त्वमेकोऽर्थमर्थने ।
विपत्तिरपि सश्लाघ्योपकारव्रतिनोऽनल ॥ २२ ॥
देवी भागीरथी पूर्वं भक्त्यास्माभि प्रतोषिता ।
निमज्जतस्त्वद्वोदीर्णं ताप निर्वापयिष्यति ॥ २३ ॥
गङ्गा तद् गच्छ मा कार्षीर्विलम्ब हव्यवाहन ।
अर्थेष्ववश्यकार्येषु सिद्धये क्षिप्रकारिता ॥ २४ ॥

18 *c* T, Vı भुञ्जन

20 *a* Vi., T नयते *c* T, Vı. तताऽन्नानि प्रजायन्त तनासि—

21 So Bh., others अन्तश्चराऽसि *b* So Vā 2 T, Vı तानि त्वद्वल-वन्ति च *c* T, Vı त्वत्ता जावितभूयस्त्व, Bh. तना जीवनभूतस्त्व *d* T, Vi, Bh —दाऽसि तत् After this Bh., G, S read

जन्न मकल्म्यास्य त्वमकोऽस्युपकारकृत ।
कार्योपपादन तत्र त्वत्ताऽन्य क प्रभञ्जन ॥

22 *a* T, Vi सुरसैन्याना *c* T, Vi read

विपदाऽपि पद श्लाघ्यापकारव्रति ना हि म ।

Bh., G have विपदाऽपि पद श्लाघ्यापकारव्रतिना हि मा

24 *b* Va-2, T, Vi. विपाद हव्य— *c* So T, Vı, Va 2, S कार्येष्ववश्यकार्येषु, Bh., G read

गङ्गा तद् गच्छ मा कार्षीर्विलम्ब हव्यवाहन ।
तत्र गत्वा च तद्वीजमभाघ मुञ्च सुस्थिरम् ॥

For a close parallel cf Dante, *Divine Comedy*, II, 3, l. 78

शभोरम्भोमयी मूर्ति सैव देवी सुरापगा ।
त्वत्त स्मरद्विपो बीज दुर्धर धारयिष्यति ।। २५ ।।
इत्युदीर्य शुनासीरो विरराम स चानल ।
तद्विसृष्टस्तमामन्त्र्य प्रतस्थे स्वर्धुनीमभि ।। २६ ।।
हिरण्यरेतसा तेन देवी स्वर्गतरङ्गिणी ।
तीर्णाध्वना प्रपेदे सा नि शेषाघविनाशिनी ।। २७ ।।
स्वर्गारोहणनि श्रेणिर्मोक्षमार्गाधिदेवता ।
उदारदुरितोद्गारहारिणी दुर्गतारिणी ।। २८ ।।
महेश्वरजटाजूटवासिनी पापनाशिनी ।
सगरान्वयनिर्वाणकारिणी धर्मचारिणी ।। २९ ।।
विष्णुपादोदकोद्भूता ब्रह्मलोकादुपागता ।
त्रिभि स्रोतोभिरश्रान्त पुनाना भुवनत्रयम् ।। ३० ।।
जातवेदसमायान्तमूर्मिहस्तै समुच्छ्रितै ।
आजुहावार्थससिद्धचै सुप्रसादघरेव सा ।। ३१ ।।
समिलद्भिर्मरालै सा कल कूजद्भिरुन्मदै ।
ददे श्रेयासि दु खानि निहन्मीति तमभ्यधात् ।। ३२ ।।
कल्लोलैरद्गतैरर्वाचीन तटमभिद्रुतै ।
प्रीतेव तमभीयाय स्वर्धुनी जातवेदसम् ।। ३३ ।।
अथाभ्युपेतस्तापार्तो निममज्जानल किल ।
विपदा परिभूता कि व्यवस्यन्ति विलम्बितुम् ।। ३४ ।।

26 *a* T V₁ S, Bh सुनासीरो *c* Bh, G, S तमापृच्छ्य
27 *d* Bh, G, S नि शेषक्लेशनाशिनी
28 *b* T, V₁ स्वर्गमार्गा—
29 T, V₁ सागरान्वय—, S सरागान्वय—, cp Md I, 54*b*
*d* T, V₁ Bh धर्मधारिणी
30 *b* Vā 2—लोकानुपा— *d* T, V₁ पुनाति भु—
31 *b* —हस्तै समुत्थितै J *c* and *d* T आजुहावास्य ससिद्धचै सुप्रसादादरेव सा, आजुहावार्थसिद्धचै त J, आजुहावास्य ससिद्धौ सुप्रसादादरेव सा V₁
33 *b* तटमुपागतै Bh, G *c* प्रीत्येव तमभी—Bh, G, V₁
34 *a*—भ्युपेत्य तापार्तो Bh, G, T, V₁ *c* विपदा परिभूत कि व्यवस्यति—Bh, G

गङ्गावारिणि कल्याणकारिणि श्रमहारिणि ।
स मग्नो निर्वृतिं प्राप पुण्यकारिणि तारिणि ॥ ३५ ॥
तत्र माहेश्वरं धाम सञ्चक्राम हविर्भुज ।
गङ्गायामिद्धभङ्गायामन्तस्तापदिपद्धृति ॥ ३६ ॥
कृशानुरेनसो रेतस्यादृते सरिता तया ।
निश्चक्राम तत सौम्य हव्यवाहो वहन् वहु ॥ ३७ ॥
सुधासारैरिवाम्भोभि परिषिक्तो हुताशन ।
यथागतं जगामाथ परां निर्वृतिमादधत् ॥ ३८ ॥
सा सुदुर्विषहं काम धाम कामजितो महत् ।
आदधाना परीतापमवाप व्योमवाहिनी ॥ ३९ ॥
वहिरार्ता युगान्ताग्नेस्तप्तानीव शिखागते ।
हित्वोष्णानि जलान्यस्या निर्जग्मुर्जलजन्तव ॥ ४० ॥
तेजसा तेन रौद्रेण तप्तानि सलिलान्यपि ।
समुदञ्चन्ति चण्डानि दुर्भराणि बभार सा ॥ ४१ ॥
जगच्चक्षुषि चण्डांशौ किंचिदभ्युदयोन्मुखे ।
जग्मु षट् कृत्तिका माघे मासि स्नातुं सुरापगाम् ॥ ४२

35 d पुण्यसारिणि तारिणि G, J, Bh., S

36. Vā-2, P 1 omit verses 36–40 c and d गङ्गायामुत्तरङ्गायाम्— J d So J, S, others—विपद्धृत, —मन्तस्तापनिदामृति Bh, G

37 b—रेतस्याहृते T, V1, note confusion of द—ह, cp note on गन्दा—गन्हा in my *Atharva-Prātiśākhya*, Intr, p 65

38 b—रभिषिक्ता—G, J

39 a J, S have गङ्गा काम Bh reads 38-39

सुधासारैरिवादारैरभिषिक्ता हुताशन ।
यथागतं जगामाथ परां निर्वृतिमादधन् ॥ ३८ ॥
सुधासारैरिवाम्भोभि परिषिक्तो हुताशन ।
आदधाना परीतापमवाप व्योमवाहिनी ॥ ३९ ॥

41. d दुर्वराणि J, S

शुभ्रैरभ्रकपैरूर्मिशतै स्वर्गमन सताम् ।
कथयन्तीमिवालोकावगाहाचमनादिना ॥ ४३ ॥
सुस्नाताना मुनीन्द्राणा बलिकर्मोचितैरलम् ।
बहि पुष्पोत्करै कीर्णतीरा दूर्वाक्षतान्वितै ॥ ४४ ॥
ब्रह्मध्यानपरैर्योगिवरैर्ब्रह्मासनस्थितै ।
योगनिद्रा गतैर्भोगिभोगबद्धैरुपाश्रिताम् ॥ ४५ ॥
पादाङ्गुष्ठाग्रभूमिष्ठै सूर्यसविष्टदृष्टिभि ।
ब्रह्मर्षिभि पर ब्रह्म गृणद्भिरुपसेविताम् ॥ ४६ ॥
अथ दैवी धुनी देवीमभ्यनन्दन् विलोक्य ता ।
क नाभिनन्दयत्येषा दृष्टा पीयूषवाहिनी ॥ ४७ ॥

43 *b* and *d*

—शतै स्वर्गनिवासिनाम् ।
कथयन्तीमिवालोकावगाहाचमनादिकम् ॥
—J , S

45 So Vā 2 , G reads

परैर्योगिवरैर्ब्रह्मासनस्थितै ।
योगनिद्रागतैर्भोगिभोगयुक्तैरुपाश्रिताम् ॥

J , S

परैर्योगपरैर्ब्रह्मासनस्थितै ।
योगनिद्रागतैर्योगपदबन्धैरुपाश्रिताम् ॥

T , V1

परैर्योगपरै पद्मासनस्थितै ।
योगनिद्रा गतैर्भोगिभोगबद्धैरुपाश्रिताम् ॥

46 *a* So G , Bh , Va-2 P 1, V1 , —भूयिष्ठै T , —भूमिस्थै J , S *b*—सबद्धदृष्टिभि J , S

47 *a* So Bh , G , दिव्या नदी देवीम् J , S , Vā 2 , —दैवी धुनीं T , V1 *c* So J , S , T , V1 , Vā 2, Bh त्रि ना— *d* देवी पी—G , S , T , V1

चन्द्रचूडामणिर्देवो यामुद्वहति मूर्धनि ।
यस्या विलोकन पुण्य श्रद्दधुन्ना मुदा हृदि ॥ ४८ ॥
दिष्टया विष्णुपदी देवी निर्वाणपददेनिनीम् ।
निर्धूतकल्मपा मूर्ध्ना सुप्रह्वास्ता ववन्दिरे ॥ ४९ ॥
सौभाग्यै खलु सुप्रापा मोक्षप्रतिभुव सतीम् ।
भक्त्या प्रतुष्टुवुस्ता ता श्रद्दधाना दिवो धुनीम् ॥ ५० ॥
मुक्तिश्रीसङ्गदौत्यज्ञैस्तत्र ता विमलैर्जलै ।
प्रक्षालितमला सन्तु सुस्नातास्तपसान्विता ॥ ५१ ॥
स्नात्वा तत्र सुलभ्याया भाग्यै परिपचेलिमै ।
चरितार्थं स्वमात्मान बहु ता मेनिरे मुदा ॥ ५२ ॥
कृशानुरेतसो रेतस्तासामभि कलेवरम् ।
अमोघ सञ्चाराय सद्यो गङ्गावगाहनात् ॥ ५३ ॥
रौद्र सुदुर्धर धाम दधाना दहनात्मकम् ।
परितापमवापुस्ता मग्ना इव विपाम्बुधौ ॥ ५४ ॥
अक्षमा दुर्वह वोढुमम्बुनो वहिरातुरा ।
अग्नि ज्वलन्तमन्तस्ता दधाना इव निर्ययु ॥ ५५ ॥

48 *c* तस्या वि—G, T V1, तस्यावशा Bh *d* So majority, श्रद्दधुन्ना मु—, cp 49*d*, 50*d*

49 *a* So T, V1 *b*—पददर्शिनीम् Bh, G *d*—ह्वास्ता V1

50 So Va-2, J, सभाग्यै Bh, स्वभाग्यै खलु सुप्राप्ता T, V1 *b* The use of सती is significant, for it designates Parvati (=*parvatasyapatyam*, sister of Ganga), —भुव सताम् Bh., V1. *c* भक्त्यात्र तुष्टुवु—J, S, T, V1 *d* श्रद्दधाना सिषेविरे Bh, *G*, *J*, *T*, *V1*

51 Omitted by Vā 2 but shown on margin by P 1 *a*—दूत्यज्ञै J, S *b* तत्र मातिमन्जलै Bh, G

52 *a*—तत्र सुरम्याया T, Vi, but cp सुप्रापा in 15 *c* and *d* So Vā 2, P 1, J and majority, चरितार्थमिवात्मान T, Vi *d* बहुमा म—Bh, G

55 *c*—न्तमन्त स्य T, V1 For *c* and *d* Bh, G read

निर्ययु सहिता शीघ्र कृत्तिका विस्मयान्विता ॥

अमोघ शाभव बीज सद्यो नद्योज्झित महत् ।
तासामभ्युदर दीप्त स्थित गर्भत्वमागमत् ॥ ५६ ॥
सुज्ञा विज्ञाय ता गर्भीभूत तद् वोढुमक्षमा ।
विषादमदधु सद्यो गाढ भर्तृभिया ह्रिया ॥ ५७ ॥
तत शरवणे सार्धं भयेन व्रीडया सह ।
तद् गर्भजातमुत्सृज्य ता गृहानभितो ययु ॥ ५८ ॥
ताभिस्तत्रामृतकरकलाकोमल भासमान
तन्निक्षिप्त क्षणमभिनभो गर्भमभ्युज्जिहानै ।
स्वैस्तेजोभिर्दिनपतिशतस्पर्धमानैरमानैर्
वक्त्रै षड्भि स्मरहरगुरुस्पर्धया चाजनीव ॥ ५९ ॥

इति श्रीकुमारसभवे महाकाव्ये कविकालिदासकृतौ कार्त्तिकेयोत्पत्तिर्नाम दशम॰ सर्गः ॥

56 *b*—नद्या म्यित महत् T, $V_1$

57 *b* So Bh, others गर्भभूत *d*—भयाद ध्रिया T, $V_1$ After this Bh, G, T $V_1$ add

अकामभरण जानमकाण्ड भाविनोऽर्थत ।
सभूयान्योन्यमात्मान शुशुचुस्तास्तदाविलम् ॥

This is omitted by Va 2, P 1

58 T, $V_1$ read

तत शरवणे शापभयेन व्रीडया सह ।
तद् गर्भजातमुत्सृज्य ता गृहानभितो ययु ॥

J, S

तत शरवणे सार्धं भयेन व्रीडया च ता ।
तद्गर्भजातमुत्सृज्य स्वान् गृहानभिनिर्ययु ॥

59 *b* तद्विक्षिप्त J, S, ' Va 2 *c*—दिनकरशत—G, T, $V_1$ *d*—स्मरहरशिर स्पर्धयेव प्रणेदे G, T $V_1$ For *c* and *d* Bh has

तैस्तेजोभिर्दिनकरशतस्पर्धमानैरमानैर्
वक्त्र षड्भि स्मरहरशिर स्पर्धयेव प्रणेदे ॥

Colophon J, S, T इति श्रीकालिदासकृतौ कुमारसभवे कुमारोत्पत्तिर्नाम दशम सर्ग, $V_1$ इति कुमारसभवे दशम सर्ग.

## ॥ एकादशः सर्गः ॥

अभ्यर्थ्यमाना विबुधै समग्रै
प्रह्वं सुरेन्द्रप्रमुखैरुपेत्य ।
त पाययामास सुधातिपूर्ण
सुरापगा स्वस्तनमाशु मूर्ता ॥ १ ॥
पिबन् स तस्या स्तनयो सुधौघ
क्षण क्षण साधु समेधमान ।
प्रापाकृति कामपि षड्भिरेत्य
निषेव्यमाण खलु कृत्तिकाभि ॥ २ ॥
भागीरथीपावककृत्तिकानाम्
आनन्दबाष्पाकुललोचनानाम् ।
त नन्दन दिव्यमुपातुमासीत्
परस्पर प्रौढतरो विवाद ॥ ३ ॥
अत्रान्तरे पर्वतराजपुत्र्या
सम शिव स्वैरविहारहेतो ।
नभो विमानेन विगाहमानो
मनोऽतिवेगेन जगाम तत्र ॥ ४ ॥
निसर्गवात्सल्यवशाद् विवृद्ध-
चेत प्रमोदौ गलदश्रुनेत्रौ ।
अपश्यता त गिरिजागिरीशौ
षडानन तद्दिनजातमात्रम् ॥ ५ ॥

1 *c* T, Vi.—धामिपूर्णं, cp सुपूर्णं 14*d* *d* T, Vi. धात्री
2 *c* T, Vi.—रैप
4 *d* Bh. मनानिवेगेन
5 *a* T, Vi निसर्गवात्सल्यविवृद्धचेन पृथुप्र— *d* So T, Vi, cp the last sloka of the canto षष्ठे दिने etc Vā 2, S, Bh षड्दिनजातमात्रम्

अथाह देवी शशिखण्डमौलि
कोऽय शिशुर्दिव्यवपु पुरस्तात् ।
कस्याथवा धन्यतमस्य पुसो
मातास्य का भाग्यवतीषु धुर्या ॥ ६ ॥
स्वर्गापगासावनलोऽयमेता
षट् कृत्तिका कि कलहायमाना ।
पुत्रो ममाय न तवायमित्य
मिथोऽतिवैलक्ष्यमुदाहरन्ति ॥ ७ ॥
एतेषु कस्येदमपत्यमीशा-
खिलत्रिलोकीतिलकायमानम् ।
अन्यस्य कस्याप्यथ देवदैत्य-
गन्धर्वसिद्धोरगराक्षसेषु ॥ ८ ॥
श्रुत्वेति वाच हृदयप्रियाया
कौतूहलिन्या विमलस्मितश्री ।
सान्द्रप्रमोदोदयसौख्यहेतु-
भूत वचोऽवोचत चन्द्रचूड ॥ ९ ॥
जगत्त्रयीनन्दन एष वीर
प्रवीरमातुस्तव नन्दनोऽस्ति ।
कल्याणि कल्याणकर सुराणा
त्वत्तोऽपरस्या कथमेष सर्ग ॥ १० ॥
देवि त्वमेवास्य निदानमाद्ये
सर्गे जगन्मङ्गलगानहेतो ।
सत्य त्वमेवेति विचारयस्व
रत्नाकरे युज्यत एव रत्नम् ॥ ११ ॥

7 *d* G, Bh —हरन्त
9 *a* G, S वाक्य
10 *a* Bh जगत्त्रयानन्दन एष— *b* G, T, V1 प्रवीरमातस्तव नन्दनाऽयम्, so Bh with—नन्दनोऽस्ति
11 *a* निदानमास्ये S, —नमार्ये T, V1 *b* T, V1 स्वर्गे ज—

अत शृणुष्वावहितेन वृत्त
बीज यदग्नौ निहित मया तत् ।
सकान्तमन्तस्त्रिदशापगाया
तत्रोऽवगाहे सति कृत्तिकासु ॥ १२ ॥
गर्भत्वमाप्त तदमोघमेतत्
तासि शरस्तम्बमपि स्थितासि ।
बभूव तत्रायमभूतपूर्वो
महोत्सवोऽशेषचराचरस्य ॥ १३ ॥
अशेषविश्वप्रियदर्शनेन
धुर्या त्वमेतेन सुपुत्रिणीनाम् ।
अल विलम्ब्याचलराजपुत्रि
सुपर्णमुत्सङ्गतल विधेहि ॥ १४ ॥
अथेति वादिन्यमृतांशुमौलौ
शैलेन्द्रपुत्री रभसेन सद्य ।
सान्द्रप्रमोदेन सुपीनगात्री
धात्री समग्रस्य चराचरस्य ॥ १५ ॥
किरीटबद्धाञ्जलिभिर्नमस्यैर्
नमस्कृता सत्वरनाकिलोकै ।
विमानतोऽवातरदात्मज त
ग्रहीतुमुत्कण्ठितमानसाभूत् ॥ १६ ॥
स्वर्गापगापावककृत्तिकादीन्
कृताञ्जलीनानमतोऽपि भूय ।

12 *a* Bh अत्र शृणुष्वा— *c* G, Bh निदिशापगाया *d* T, Vi विगाहे सति, cp note on I, 1
14 *d* So Bh., T, Vi., Va 2, S, G स्वपुत्रमुत्सङ्गतल निधेहि
15 *d* Va 2, S समस्तस्य
16 *b* T, Vi —नाकनाकै— *d* Bh. गृहीतु—
17 *b* G, Bh. मूर्ध्नां, T, Vi मूर्ध्ना *c* G, T, Vi., Bh सुतान्—
*d* So T, Vi., others वा, cp —कस्य चेत, 20

हित्वोत्सुका त सुतमाससाद
पुत्रोत्सवे माद्यति को न हर्षात् ॥ १७ ॥
प्रमोदबाष्पाकुललोचना सा
न त ददर्श क्षणमग्रतोऽपि ।
परिस्पृशन्ती करकुड्मलाभ्या
सुखान्तर प्राप किमप्यपूर्वम् ॥ १८ ॥
स विस्मयानन्दविकस्वराया
शिशुर्गलद्बाष्पतरङ्गिताया ।
विवृद्धवात्सल्यरसोत्तराया
देव्या दृशो गोचरता जगाम ॥ १९ ॥
तमीक्षमाणा क्षणमीक्षणाना
सहस्रमाप्तु विनिमेषमैच्छत् ।
सुनन्दनालोकनमङ्गलेषु
क्षण क्षण तृप्यति कस्य चेत ॥ २० ॥
विनम्रदेवासुरपृष्ठगाभ्याम्
आदाय त पाणिसरोरुहाभ्याम् ।
नवोदयत्पार्वणचन्द्रचारु
गौरी स्वमुत्सङ्गतल निनाय ॥ २१ ॥
स्वमङ्कमारोप्य सुधानिधानम्
इवात्मनो नन्दनमिन्दुवक्त्रा ।
तमेकदेव जगदेकदेवी
बभूव पूज्या धुरि पुत्रिणीनाम् ॥ २२ ॥

18 *c* So Va 2 T $V_1$ others कुड्मलेन, cp 21 पाणिसरोरुहाभ्या in all

19 *a* S, G P I, Bh सुविस्म— *d* G S, Bh दृशोर्गोच—

20 *c* So T, $V_1$ G, Bh न नन्दना—, S, Va 2 सानन्दनालोकन—, cp 27*a* and above सुविस्मया— *d* Bh —हृप्यति कस्य चेत

21 *c* So G, Bh T $V_1$ महोदयात् पार्वण— others नवोदयं पा— *d* Bh तमुत्सङ्गतल—

22 *c* So T $V_1$, others तमेकमेपा जगदेकवीर

निसर्गवात्सल्यरसौघसिक्ता
सान्द्रप्रमोदामृतपूरपूर्णा ।
तमेकपुत्रं जगदेकमाता-
म्युत्सङ्गिनं प्रस्नविणी बभूव ॥ २३ ॥
अशेषलोकत्रयमातुरस्याः
षाण्मातुरः स्तन्यसुधामधासीत् ।
सुरत्रवन्त्यानलकृत्तिकाभिर्
मुहुर्मुहुः सस्पृहमीक्ष्यमाणः ॥ २४ ॥
सुखाश्रुपूर्णेन मृगाङ्कमौले
कलत्रमेकेन मुखाम्बुजेन ।
तस्यैकनालोद्गतपञ्चपद्म-
लक्ष्मीं क्रमात् षड्वदनीं चुचुम्ब ॥ २५ ॥
हैमं फलं हैमगिरेर्लतेव
विकस्वरं नाकनदीव पद्मम् ।
पूर्वेव दिङ् नूतनमिन्दुमाभात्
तं पार्वती नन्दनमादधाना ॥ २६ ॥
प्रीतामना सुप्रयतेन दत्त-
हस्तावलम्बा शशिशेखरेण ।
कुमारमुत्सङ्गतले दधाना
विमानमभ्रंलिहमारुरोह ॥ २७ ॥

23 c G, Bh. तमेकमव जगदेकदत्री— d T, Vi (—माता—) मुत्सङ्गिन, Bh.—म्युत्सङ्गिन प्रस्नविनी—
24 c S सुरस्रवन्त्या कृत्ति—, Va-2—स्रवन्त्या कृत्ति—
25 c T, Vi.—कनालाद्गमपञ्च— d Bh. चुचुम्ब
26 a So T, Vi., G, others हैमीं फलं
27 a So all except S with सा प्रयतेन, for a similar confusion cp 19a, 20c, 40a

महेश्वरोऽपि प्रमदप्ररूढ-
रोमोद्गमो भूधरनन्दनाया ।
अङ्कादुपादत्त तदङ्कत सा
तस्यास्तु सोऽप्यात्मजवत्सलत्वात् ॥ २८ ॥
दधानया नेत्रसुधैकसत्र
पुत्र पवित्र सुतया तयाद्रे ।
सश्लिष्यमाण शशिखण्डधारी
विमानवेगेन गृहान् जगाम ॥ २९ ॥
अधिष्ठित स्फाटिकशैलशृङ्गे
तुङ्गे निज धाम निकामरम्यम् ।
महोत्सवाय प्रमथप्रमुख्यान्
पृथून् गणान् शभुरथादिदेश ॥ ३० ॥
पृथुप्रमोदप्रगुणो गणाना
गण समग्रो वृषवाहनस्य ।
गिरीन्द्रपुत्र्यास् तनयस्य जन्म-
न्यथोत्सव सववृते विधातुम् ॥ ३१ ॥

28 *c* T, $V_1$ अकाण्डमादत्त तमङ्कन स
तस्यास्तु सौम्यात्मजवत्सल्त्वान् ॥

G agrees with ours except—सोऽस्यात्मज—

29 *a* So Va 2 P 1, S, G (सत्र सदादानम्=नेत्रयारमृतवत् सुखदा तारम्), T, $V_1$ दत्त्वानया नेत्रसुधैकपात्र *b* T, $V_1$—सुतया तयाद्रे *c* G, Bh—खण्डमौलि *d* T, $V_1$ गृहम, Bh ग्रहान्

30 G, Bh—ष्ठितस्फाटिक— *b* T तुङ्गे निजे धामनि कामरम्ये, $V_1$ agrees with T except in काऽरम्य, Bh तुङ्गे निजे धाम्नि निकामरम्ये *c* and *d* T reads

महोत्सवाय प्रमथान् स नाय
पृथून् महिम्ना स्वमुदादिदेश ॥

Bh G महोत्सवाय प्रमथान् सनाय
पृथून् प्रथिम्ना पृथगादिदेश ।

31 *a* So Vā 2, P 1, G, Bh, T, $V_1$ पृथुप्रमोद प्रगुणो गणाना

स्फुरन्मरीचिच्छुरिताम्बराणि
सुताननाग्निप्रनवाग्न्विनानि ।
वन्दिक्षिपु काञ्चनतोरणानि
गणा वराणि स्फटिकालयेषु ॥ ३२ ॥

दिक्षु प्रनर्पन्नदधीश्वराणाम्
अयामराणामिव नाकिलोके ।
महोत्सव नन्दिनुमाहनोज्स्यैर्
दध्वान धीर पटह पटीयान् ॥ ३३ ॥

महोत्सवे तत्र समागतानां
गन्धर्वविद्याधरसुन्दरीणाम् ।
मनादिनाना गिरिराजपुत्र्या
गृहेऽभवन्मङ्गलगीतकानि ॥ ३४ ॥

भुन ङ्गलोंगाधनभानहत्नाम्
त मानतो मानृवदन्युपेना ।
निवाय दूर्वाक्षतकानि मूर्ध्नि
निन्यु स्वमङ्क गिरिजातनूजम् ॥ ३५ ॥

ध्वनत्सु तूर्येषु सुमन्द्रमङ्क्या-
लिङ्गर्चोर्ध्वेक्ष्विप्सरसो रसेन ।
मुखविवत्र ननृतु भवृत्ति
गीतानुग भावरसानुविद्धम् ॥ ३६ ॥

वाता ववु सौख्यकरा प्रसेदुर्
आशा विधूमो हुतभुग् दिदीपे ।
जलान्यभूवन् विमलानि तत्रो-
त्सवेऽन्तरिक्ष प्रननाद मद्य ॥ ३७ ॥

32 *c* Bh. विचिनितु- *d* T, Vi. गगान्चलानि
33 *b* So G, Bh.,—मिव मन्दगाव in S, Vā 2 *d* S धीर, śloka omitted by T, Vi.
35 *b* T, Vi.—दम्युपन
36 *c* So Bh., Vā-2, P 1, S मुवृत्तगीता—('मुवृत्तानि शानन-च्छन्दांसि गीतानि'), G नवृत्ति गीत for which cp VII, 91 व्यञ्जितवृत्तिभेद, T, Vi मुवृत्तिगीतानुग

गम्भीरशङ्खध्वनिमिश्रमुच्चैर्
गृहोद्भवा दुन्दुभय प्रणेदु ।
दिवौकसा व्योम्नि विमानसघा
विमुच्य पुष्पप्रचयान् प्रसस्रु ॥ ३८ ॥
इत्थ महेशाद्रिसुतासुतस्य
जन्मोत्सवे समदयाचकार ।
चराचर विश्वमशेषमेतत्
पर चकम्पे किल तारकश्री ॥ ३९ ॥
तत कुमार स मुदा निदानै
स्वबाललीलाचरितैर्विचित्रै ।
गिरीशगौर्योर्हृदय जहार
मुदे न हृद्या किमु बालकेलि ॥ ४० ॥
महेश्वर शैलसुता च हर्षात्
सतर्षमेकेन मुखेन गाढम् ।
अजातदन्तानि मुखानि सूनोर्
मनोहराणि क्रमतश्चुचुम्ब ॥ ४१ ॥
क्वचित् स्खलद्भि क्वचिदस्खलद्भि
क्वचित् प्रकम्पै क्वचिदप्रकम्पै ।

38 *a* Bh , G —शब्दध्वनि— *b* So Vā 2, P 1, Bh and others दिवि ध्रुवा— *d* T , V1 विमुञ्चता पुष्पचयान्

39 *b* T , V1 , G , Bh जन्मोत्सव

40 *a* Vā 2, P 1, S , Bh सुमुदा , cp note on 27*a*, T , V1 समुदी *b* Vā 2, P 1, G , S , Bh स बाल—, Bh स बाललीलाललितै— *d* Vā 2, P 1—किल बाल—may be मुदे नु हृद्या किल बालकेलि

41 *a* and *b* T , V1

महेश्वर शैलसुतापि हर्षात्
सहर्षमेकेन मुखेन गाढम् ।

So Bh , G *except in* सतर्षम् (*for* सहर्षम्) *c* and *d* Bh . अजातदन्तानि मनोहराणि वक्त्राणि सूनो क्रमतश्चुचुम्बे

42 *c* T , V1 बाल सलील च— *d* S तयामुंद वर्धयति स्म पित्रो , III

वाल स लीलाचलनप्रयोगैस्  
तयोर्मुद कन्दलयाचकार ॥ ४२ ॥

अहेतुहासच्छुरिताननेन्दुर्  
गृहाङ्गणक्रीडनधूलिधूम्र ।  
मुहुर्वदन् किंचिदलक्षितार्थं  
मुद तयोरङ्कगतस्तनान ॥ ४३ ॥

गृह्णन् विषाणे हरवाहनस्य  
स्पृशन्नुमाकेसरिण सटाली ।  
स भृङ्गिण सूक्ष्मतर शिखाग्र  
कर्षन् बभूव प्रमदाय पित्रो ॥ ४४ ॥

एको नव द्वौ दश पञ्च सप्ते-  
त्यजीगणन् मञ्जु मुख प्रसार्य ।  
महेशकण्ठोरगदन्तपङ्क्तिं  
तदङ्कग शैशवनुन्नभीति ॥ ४५ ॥

कपर्दिकण्ठान्तकपालदाम्नो-  
ऽङ्गुलि प्रवेश्याननकोटरेषु ।  
दन्तानुपात्तु रभसीबभूव  
मुक्ताफलभ्रान्तिकरान् कुमार ॥ ४६ ॥

43 *b* T, V1, G गेहाङ्गणक्रीडन—, so Bh. with—ङ्गन—, cp *As*, VII, 17

44 *b* Va 2, P 1, S —केसरिण सलीलम्, cp आमर्दक्लिष्टकेसरः *As*, VII, 14.

45 Vā-2, P 1, S अजीगणनान्यमुख (—णन् नान्य—? Comm in S leaves ना—unexplained) *d* So G, Bh, Vā 2, P 1, S शैशवमौग्ध्यमैशि ("शैशवमौग्ध्य बाल्त्वनिमित्तमूढता दधान), T, VL शैशवमुग्धमैशि, Bh तदङ्कग शैशव—

46 *d* So T, VL, Bh, G—भ्रान्तिधर कुमार, Va-2, P 1, S —भ्रान्तिकर कुमार

शंभो शिरोऽन्तः सरितस्तरङ्गान्
विगाह्य गाढं शिशिरान् रसेन ।
स जातजाड्यं निजपाणिपद्मम्
अतापयद् भालविलोचनाग्नौ ॥ ४७ ॥

किंचित् कलं भङ्गुरकन्धरः स
नमज्जटाजूटधरस्य शंभोः ।
प्रलम्बमानं किल कौतुकेन
चिरं चुचुम्बे मुकुटेन्दुखण्डम् ॥ ४८ ॥

इत्थं शिशोः शैशवकेलिवृत्तैर्
मनोऽभिरामैर्गिरिजागिरीशौ ।
मनोविनोदैकरसप्रसक्तौ
दिवानिशं नाविदतां कदाचित् ॥ ४९ ॥

इति बहुविधं बालक्रीडाविचित्रविचेष्टितम्
ललितललितं सान्द्रानन्दं मनोहरमाचरन् ।
अलभत परां बुद्धिं षष्ठे दिने नवयौवनं
स किल सकलं शस्त्रं शास्त्रं विवेद विभोरपि ॥ ५० ॥

इति श्रीकुमारसंभवे महाकाव्ये कविकालिदासकृतौ बालक्रीडावर्णनं नामैकादशः सर्गः ॥

47 c So Vā 2, P 1, Bh., S, G, T, V1. सजातजाड्यो
48 a So Va 2, P 1, G, Bh —कन्धरस्य, so S in text but cp commentary "भङ्गुरा पतनशीला कन्धरा यस्य, बालत्वात् स कुमारः", the usual divergence between text and commentary, T, V भङ्गुरकण्ठरम्यनमज्जटा—
49 c T, V1 मुदा विनोदैक—
50 c So Vā 2, P 1, S, T, V1, Bh, G वृद्धिं d So T, V1, Bh, G, others विभुर्यया

Colophon T इति कुमारसंभवे कुमारकौमारवर्णनो नामैकादशः सर्गः so V1 except—वर्णनं—, G इति श्रीकुमारसंभवे कार्तिकेयबालक्रीडावर्णनं नाम, so Bh., S कुमारोत्पत्तिर्नामैका—

## ॥ द्वादशः सर्गः ॥

अथ प्रपेदे त्रिदशैरशेषै
क्रूरासुरोपप्लवदुःखितात्मा ।
पुलोमपुत्रीदयितोऽन्धकारि
तृषातुरश्चातकवत् पयोदम् ॥ १ ॥
दृप्तासुरत्रासखिलीकृतात् स
कथंचिदम्भोदविहारमार्गात् ।
अवाततारामि गिरिं गिरीश-
गौरीपदन्यासविशुद्धमिन्द्रः ॥ २ ॥
सक्रन्दनः स्यन्दनतोऽवतीर्य
मेघात्मनो मातलिदत्तहस्तः ।
पिनाकिनोऽथालयमुच्चचाल
शुचौ पिपासाकुलितो यथाम्भः ॥ ३ ॥
इतस्ततोऽथ प्रतिबिम्बभाजं
विलोकमानः स्फटिकाद्रिभूमौ ।
आत्मानमप्येकमनेकधा स
व्रजन् विमोहास्पदमाससाद ॥ ४ ॥
विचित्रचञ्चन्मणिभङ्गिसङ्गं
सौवर्णदण्डं दधतातिचण्डम् ।
स नन्दिनाधिष्ठितमभ्यतिष्ठन्
सौधाङ्गणद्वारमनङ्गशत्रोः ॥ ५ ॥

1 *d* So T, Vi, Bh, Vā-2, P 1 पर्यीव तृष्णाव्यथित पयोदम्, S पत्नीव तृष्णातुरित पयोदम्
2 *a* So T, Vi, Bh, Vā-2 P I, S दृप्तारिमनाम—
3 *c* T, Vi पिनाकिरम्यालयमु— *d* T, Vi, Bh —शाकुलवज्जलौघम्
4 *a* T, Vi, Bh.—ततोऽपि
5 *a* and *b* T, Vi, Bh विचित्रवञ्चमणिमङ्गिभङ्गिसौवर्णदण्ड *d* Bh मौघाङ्गन—

तत स कक्षाहितहेमदण्डो
नन्दी सुरेन्द्र प्रतिपद्य सद्य ।
प्रतोषयामास सुगौरवेण
गत्वा शशस स्वयमीश्वरस्य ॥ ६ ॥
भ्रूसज्ञयानेन कृताभ्यनुज्ञ
सुरेश्वर त जगदीश्वरेण ।
प्रवेशयामास सुरै पुरोग
सम स नन्दी सदन हरस्य ॥ ७ ॥
स चण्डिभृङ्गिप्रमुखैर्गरिष्ठैर्
गणैरनेकैर्विविधस्वरूपै ।
अधिष्ठिताया सदि रत्नमय्या
सहस्रनेत्र. शिवमालुलोके ॥ ८ ॥
कपर्दमुद्बद्धमहीनमूर्ध-
रत्नाशुभिर्भासुरमुल्लसद्भि ।
दधानमुच्चैस्तरमिद्धधातो
सुमेरुशृङ्गस्य समत्वमाप्तम् ॥ ९ ॥
बिभ्राणमुत्तुङ्गतरङ्गमाला
गङ्गा जटाजूटतट भजन्तीम् ।
गौरी तदुत्सङ्गजुष हसन्तीम्
इव स्वफेनै. शरदभ्रशुभ्रै ॥ १० ॥

6 *a* So Bh alone, cp 27 *c* Bh स गौरवेण *d* So Bh, Vā-2, P-1, S, गत्वा सदोमण्डलमीश्वरस्य T, V1

7 *a* T, V1 भ्रूसज्ञया तेन *d* Vā 2, P 1, S मदन सदस्य (=मत्+अस्य)

8 *a* Bh स चण्डभृङ्गि— *c* So Bh alone, others अधिष्ठित ससदि रत्नवत्या (and रत्नमय्याम्) *d* T, V1 —लोक

9 *a* and *b* Vā-2, P-1—महीनमूर्ध्व—(=अहि+इनम्, ऊर्ध्वरत्नाशुभि), Bh —दंमुद्बन्धमहाहिमूर्धर—, T, V1 कन्दर्पमूर्धस्यमहाहिमूर्ध्व—(र्धं ?) रत्नाशुभि—

10 *a* T, V1 —उत्तुङ्गकपालमाला *b* T, V1 —जूटतल

गङ्गातरङ्गप्रतिबिम्बितैः स्वैर्-
बहूभवन्तं शिरसा सुधांशुम् ।
ज्वलन्मरीचिप्रचयैस्तुषार-
गौरैर्हिमद्योतिनमुद्वहन्तम् ॥ ११ ॥
भालस्थले लोचनमेधमान-
धामाधरीभूतरवीन्दुनेत्रम् ।
युगान्तकालोचितहव्यवाह
मीनध्वजप्लोषणमादधानम् ॥ १२ ॥
महार्हरत्नाचितयोरुदार-
स्फुरत्प्रभामण्डलयोः समन्तात् ।
कर्णस्थिताभ्यां शशिभास्कराभ्याम्
उपासितं कुण्डलयोश्छलेन ॥ १३ ॥
स्वबद्धया कण्ठिकयेव नील-
माणिक्यमय्या कुतुकेन गौर्या ।
नीलस्य कण्ठस्य परिस्फुरन्त्या
कान्त्या महत्या सुविराजमानम् ॥ १४ ॥
कालार्दितानां त्रिदशासुराणां
चितारजोभिः परिपाण्डुराङ्गम् ।
महन्महेभाजिनमुद्गताभ्र-
प्रालेयशैलश्रियमुद्वहन्तम् ॥ १५ ॥

11 Bh omits this śloka a T, Vi.

गङ्गातरङ्गैः प्रतिबिम्बितैस्तैर्बहूभवन्तं शिरसा सुधांशुम् ।
चलन्मरीचिप्रचयैस्तुषारैर्गौरैरिशुद्योतिनमुद्वहन्तम् ॥

12 a and b so Vā 2, P 1, S, Bh., T, Vi —मेधमान धामाधरी—

13 a So Bh., Vā 2, P 1—न्वितयोरुदार, S —रत्नाञ्चितयोरुदार स्फुरत्प्र—, T, Vi.—रत्नाञ्चितयोरुदारस्फुरत्प्र—, cp एधमान धामाधरीभूत—in 12th

14 a and b So Vā 2, P 1, S (except गौर्या), while T, Vi, Bh. differ in सुबद्धया

15 c T, Vi —मुन्नताभ्र—

पाणिस्थितब्रह्मकपालपात्रं
वैकुण्ठकङ्कालकरालकायम् ।
सुरास्थिखण्डाभरणं रणान्त-
मूलं त्रिशूलं कलयन्तमुच्चैः ॥ १६ ॥
पुरातनीं ब्रह्मकपालमालां
कण्ठे वहन्तं पुनराश्वसन्तीम् ।
उद्गीर्णवेदां मुकुटेन्दुवर्षत्-
सुधाभरौघाप्लवलब्धसंज्ञाम् ॥ १७ ॥
सलीलमङ्कस्थितया गिरीन्द्र-
पुत्र्या नवाष्टापदवल्लिभासा ।
विराजमानं शरदभ्रखण्डं
परिस्फुरन्त्याचिररोचिषेव ॥ १८ ॥
दृप्तान्धिकप्राणहरं पिनाकं
महासुरस्त्रीविधवात्वहेतुम् ।
करेण गृह्णन्तमगृह्यमन्यैः
पुरा स्मरप्लोषणकेलिकारम् ॥ १९ ॥
भद्रासनं काञ्चनपादपीठं
महार्हमाणिक्यविभङ्गिचित्रम् ।

16 *b* So T, V1, G, Bh, Vā 2, S वैकुण्ठभाजापि निषेव्यमाणम्
*c* So T, V1, G, Bh, Vā 2 नरास्थि—

17 *b* G पुनरावसन्तीम् *c* and *d* Vā 2, S —त्तवेदा, T, V1
उद्गीर्णवेदा मुकुटेन्दुवर्षत्सुधौघसम्प्लावनलब्धसंज्ञाम्
G, Bh उदीर्णवेदा मुकुटेन्दुवर्षत्सुधौघ—

18 *b* T, V1 —पदतुल्यभासा *d* Bh —रन्त्या चिर—

19 *b* So S (except विधवत्वहेतुम् repeated in comment), Vā 2 माहासुर—, T, V1, Bh गजासुरस्त्रीविधवात्व— *c* and *d* T, V1 —न्तमसह्यशूलं पुरासुरप्लोषण—, note the uniform use of केलिकार in all

20 *a* and *b* Bh —पादपीठमहार्हं—(S comm 'the auspicious seat with its feet and back made of gold')

अधिष्ठितं चन्द्रमरीचिगौरैर्
उद्वीज्यमानं चमरैर्गणाभ्याम् ॥ २० ॥
शस्त्रास्त्रविद्याभ्यसनावसक्ते
सविस्मयैरेत्य गणैः सुदृष्टे ।
नीराज्यमाने स्फटिकाचलेन
सानन्दनिर्दिष्टदृशि कुमारे ॥ २१ ॥
तथाविधं शैलसुताधिनाथं
पुलोमपुत्रीदयितो निरीक्ष्य ।
आसीत् क्षणं क्षोभपरोऽथ कस्य
मनो न हि क्षुभ्यति धामधाम्नि ॥ २२ ॥
विकस्वराम्भोजवनश्रिया तं
दृशा सहस्रेण निरीक्षमाणः ।
सर्वाङ्गजेन द्युपतिर्बभासे
पुष्पोत्कराकीर्ण इवाम्रशाखी ॥ २३ ॥
दृष्ट्वा सहस्रेण दृशा महेशम्
अभूत् कृतार्थोऽतितरां महेन्द्रः ।
सर्वाङ्गजातं तदथो विरूपम्
इव प्रियाकोपकरं विवेद ॥ २४ ॥

21 *a* So Bh., Vā 2, S—भ्यसनैकसक्ते, T, Vi—नैकसक्तैः (सविस्मयैरेत्य गणैः सुदृष्टम्) *c* and *d* T, Vi सर्वाज्यमानेऽम्बिकयाञ्चलेन, rest as ours, Bh नीराज्यमानेऽम्बिकयाञ्चलेन, G नीराज्यमानेऽम्बिकया—

22 *c* Vi.—क्षोभपरोऽन्यकस्य; T—क्षामपरा नु कस्य, G, Bh—क्षोभपरोऽत्र कस्य

23 *c* So G, Bh, Vā 2, S रामालिभिः स्वर्गपतिर्बभासे, T, Vi सर्वाङ्गनेत्रो द्यु— *d* Bh., T, Vi इवाम्रशाखी

24 *b* T, Vi, Bh, G अभूत् कृतार्थं खलु तेन शक्र *c* and *d* So Vā 2, S, T, Vi have

सर्वाङ्गजानेत्रदलं विपूरं पुरा प्रियालोकपरं विवेद ।

Bh, G सर्वाङ्गजातं विकलं विरूपं पुरा प्रियाकोपपरो विवेद ।

तत कुमार कनकाद्रिसार
पुरदर प्रेक्ष्य धृतास्त्रशस्त्रम् ।
महेश्वरोपान्तिकवर्तमान
शत्रोर्जयाशा मनसा बबन्ध ।। २५ ।।
श्रीनीलकण्ठ द्युपति पुरोऽस्ति
तव प्रणामावसर प्रतीच्छन् ।
सहस्रनेत्रेऽत्र भव त्रिनेत्र
दृष्ट्वा प्रसादप्रगुणो महेश ।। २६ ।।
इति प्रबद्धाञ्जलिरेत्य नन्दी
निधाय कक्षामभि हेमवेत्रम् ।
प्रसादपात्र पुरतो भविष्णुर्
अथ स्मरारातिमुवाच वाचम् ।। २७ ।।
पुरासुरारि सुरसघसेव्य
त्रिलोकसेव्यस्त्रिपुरासुरारि ।
प्रीत्या सुधासारविसारिणेव
ततोऽनुजग्राह विलोकनेन ।। २८ ।।
किरीटकोटिच्युतपारिजात-
पुष्पोत्करेणानमितेन मूर्ध्ना ।
स्वर्गैकवन्द्यो जगदेकवन्द्य
त देवदेव प्रणनाम देव ।। २९ ।।

26 *b* T, $V_1$ त्वयि प्रणामावसर च पृच्छन्, Bh —सरप्रतीक्षन्, G तव प्रणामावसर काङ्क्षन् *c* T, $V_1$ सहस्रनेत्रोऽत्र—, Bh, G सहस्रनेत्र प्रसर त्रिनेत्रम् *d* S दृष्टया, T, $V_1$ प्रसादप्रवणो महेश, Bh, G —प्रवणो महेश

27 *b* T, $V_1$, G हेमदण्डम् *d* G, Bh —ष्णुरधि स्मरा—, T, $V_1$ —ष्णुमध्यन्धकारातिमु—

28 *a* S पुरासुरेन्द्र, G मुदासुरेद्र, T मुदाऽसुरेन्द्र, $V_1$ मुदाऽसुरारि *b* Bh T, $V_1$ त्रैलोक्यसेव्य *c* So T, $V_1$, Bh सुधासारणिधारिणेव, G —विधारिणेव, V& 2, S —निधारिणेव

29 *b* T, $V_1$ —पुष्पेण भक्त्यानमितेन मूर्ध्ना *c* Bh स्वर्गौकवन्द्यो, T, $V_1$ स्वर्गैकवन्द्योजगदेकदेव *d* T, $V_1$ ननाम देव स सहस्रनेत्र

अनेकलोकैकनमस्क्रियार्हं
महेश्वरं तं त्रिदशेश्वरः सः ।
भक्त्या नमस्कृत्य कृतार्थतायाः
पात्रं पवित्रं परमं बभूव ॥ ३० ॥
सुभक्तिभाजामधि पादपीठं
प्रान्तक्षितेर्नम्रनरैः शिरोभिः ।
ततः प्रणेमुः पुरतो गणानां
गणाः सुराणां क्रमतः पुरारिम् ॥ ३१ ॥
गणोपनीते प्रभुणोपदिष्टे
ध्रुवासने हेममये पुरस्तात् ।
प्राप्योपविश्य प्रमुदं सुरेन्द्रः
प्रभुप्रसादो हि मुदे न कस्य ॥ ३२ ॥
क्रमेण चान्येऽपि विलोकनेन
सभाविताः सस्मितमीश्वरेण ।
उपाविशन्स्तोपविशेषमाप्ताः
दृग्गोचरे तस्य सुराः समग्राः ॥ ३३ ॥
अथाह देवो बलवैरिमुख्यान्
गीर्वाणवर्गान् करुणार्द्रचेताः ।

30 *b* Bh.—त्रिदिवेश्वरः सः

31 *a* and *b* So Va 2, S has —पादपीठं प्रान्तक्षिति नम्र—(comm finds difficulty in justifying—भिरिमं), Bh., G—पीठं प्रान्तीकृतैर्नम्र—, T, Vi.—पीठं प्रीतानिभिर्नम्र— *c* and *d* So Va 2, G, S, T, Vi. ततः प्रणेमुः पुरतः सुराणां गणाः समग्राः क्रमतः स्मरारिम्, Bh agrees with this in *c* but differs in *d* गणाः सुरेन्द्रक्रमतः पुरारिम्

32 *b* So G, Bh., T, Vi नृपासने, S, Va-2 शुभासने *c* T, Vi प्रमदं *d* Bh प्रभोः प्रसादः

33 *a* Bh.—चान्येन विलोकनेन *c* Vi उपाविशन्नाथ—, T agrees here with ours *d* T, Vi पुरः समेताः

34 *b* T, Vi गीर्वाणमुख्यान् *c* T, Vi असुरैर्विधूतान् *d* T, Vi ध्वस्तश्रियान् शीर्णमुखानवेक्ष्य

कृताञ्जलीकानसुराभिभूतान्
ध्वस्तश्रिय श्रान्तमुखानवेक्ष्य ।। ३४ ।।
अहो बतानन्तपराक्रमाणा
दिवौकसो वीरवरायुधानाम् ।
हिमोदबिन्दुग्लपितस्य किं व
पद्मस्य दैन्य दधते मुखानि ।। ३५ ।।
स्वर्गौकस स्वर्गपरिच्युता किं
स्वपुण्यराशौ सुमहत्तमेऽपि ।
चिह्न चिरोढ बत यूयमेते
निजाधिपत्यस्य परित्यजध्वम् ।। ३६ ।।
दिवौकसो देवगृह विहाय
मनुष्यसाधारणतामवाप्ता ।
यूय कुत कारणतश्चरध्व
महीतले मानभृतो महान्त ।। ३७ ।।
अनन्यसाधारणसिद्धमुच्चैस्
तद्दैवत धाम निकामरम्यम् ।
कस्मादकस्मान्निरगाद् भवद्भ्यश्
चिरार्जित पुण्यमिवापचारात् ।। ३८ ।।
दिवौकसो वो हृदयस्य कस्मात्
तथाविध धैर्यमहार्यमार्या ।

35 *b* T, V1 दिवौक्सा

36 *b* T V1 सुमहत्तरेऽपि *c* Bh —चरोढ ननु—

37 *a* Bh, G स्वर्गौक्सो *c* V1 चरध्वे *d* T, V1 महीभृतो मानघना महान्त

38 *a* and *b* V1 —सिद्धमुच्चै सुदैवत— निकामकामम्, Bh तद्दैवत धाम निकामकाम्यम् G —निकायकाम्यम् *c* and *d* T, V1 —निरगाद्यमार्द्यैश्चिरार्जित पुण्यमिवापवादात्, Bh —निरगादगाध चिरार्जित पुण्यमिवापचारात्, so G

39 T, V1 omit this śloka *a* G, Bh विरुद्धतो वो हृदयस्य— *d* Bh, G ग्रीष्मातपापत्तिवशा—

अगादगाधस्य जलाशयस्य
ग्रीष्मातितापादिव सादिवाम्भः ॥ ३९ ॥
सुराः शुनासीरपुरःसराणां
समीयुषां वः सममातुराणाम् ।
तद् ब्रूत लोकत्रयजित्वरः किं
महासुरात् तारकतो विरुद्धम् ॥ ४० ॥
पराभवं तस्य महासुरस्य
निषेद्धुमेकोऽहमलमविष्णुः ।
दावानलप्लोषविपत्तिमन्यो
महाम्बुदात् किं हरते वनानाम् ॥ ४१ ॥
इतीरिते मन्मथमर्दनेन
सुराः सुरेन्द्रप्रमुखा मुखेषु ।
सान्द्रप्रमोदाश्रुतरङ्गितेषु
दधुः श्रियं सत्वरमाश्वसन्तः ॥ ४२ ॥
ततो गिरीशस्य गिरां विरामे
जगाद लब्धेऽवसरे सुरेशः ।
भवन्ति वाचोऽवसरे प्रयुक्ता
ध्रुवं फलाविष्टमहोदयाय ॥ ४३ ॥

40 T reads सुराः पुरारात्रिपुरो विवर्णं समीयिवांस सममातुराणाम् ।
Vi. has सुराः पुरारात्रिपुरः सुवर्णां समीयुषां मामसमातुराणाम् ।
तद्भूतलोकत्रय—
G, Bh.: सुराः शुनासीरपुरःसराणां समीहितं यत् सममातुराणाम् ।
तद् ब्रूत लोकत्रयजित्वरः किं महासुरायत्ता विरुद्धम् ॥
S सुराः सुरासीनपुरःसराणां, rest as ours

41 *b* T, Vi. निषेद्धुकामोऽस्म्यन्— *d* (अ)स्यन्य हर्तुं जलदात् प्रभु
स्विन् ?

42. *c* T., Vi. सान्द्रप्रमोदा सुचिरस्मितेषु

43 *a* T, Vi. गिरां विताने; cp II, 53 *d* T, Vi ध्रुवं प्रविसृष्ट-
फलोदयाय, Bh, G ध्रुवं प्रभाविष्टफलोदयाय

ज्ञानप्रदीपेन तमोऽपहेना-
विनश्वरेणास्खलितप्रभेण ।
भूत भवद् भावि च यच्च किंचित्
सर्वज्ञ सर्व तव गोचर तत् ।। ४४ ।।
दुर्वारदोर्दण्डमदु सहेन
यत्तारकेणामरघस्मरेण ।
तदीशतामाप्तवता निरस्ता
वय दिवोऽमी बत कि न वेत्सि ।। ४५ ।।
विधेरमोघ स वरप्रसादम्
आसाद्य सद्यस्त्रिजगज्जिगीषु ।
सुरानशेषानहकप्रमुख्यान्
दोर्दण्डचण्डो मनुते तृणाय ।। ४६ ।।
स्तुत्या पुरास्माभिरुपासितेन
पितामहेनेति निरूपित न ।
सेनापति सयति दैत्यमेन
पुरा स्मरारातिसुतो निहन्ति ।। ४७ ।।
अहो ततोऽनन्तरमद्य यावत्
सुदु सहा तस्य पराभवार्तिम् ।

44 *d* सर्वत्र सर्वँ तव गोचरस्तत् T, $V_1$

45 *a* T, $V_1$ दुर्वारदोर्दुर्मदटु सहेन *c* T $V_1$ तदीश नन्वात्मपदान्निरस्ता, Bh, G तदीश वामाप्लवता निरस्ता *d* G, Bh, Vā 2, S —वद कि—

46 *a* T, $V_1$, Bh, G सुवरप्र— *c* and *d* सुरान् स जम्भारिमुखान् प्रचण्टदोर्दण्डदण्डो, Bh G —स जम्भारिमुरारिमुख्यान् दोर्दण्डचण्डो मनुते—

47 *d* G पुरा स्मरारेस्तनयो निहन्ति, Bh पुरस्मरारे (पुर स्म—?) स्तनयो नि—

48 $V_1$ अकामनोऽनन्तरमद्य यावत
मुरा अदान्तस्य पराभवार्तिम् ।
विधेहिरे तस्य हृदन्तशल्यम्
आज्ञानियोग त्रि—।।

विधेहि रे हन्त हृदन्तशल्यम्
आज्ञानिवेश त्रिदिवौकसोऽस्मी ॥ ४८ ॥
निदाघधामक्लमविक्लवाना
नवीनमम्भोदमिवौषधीनाम् ।
सनन्दन नन्दनमात्मनो न
सेनान्यमेन स्वयमादिश त्वम् ॥ ४९ ॥
त्रैलोक्यलक्ष्मीहृदयैकशल्य
समूलमुत्खाय महासुर तम् ।
अस्माकमेषा पुरतो भविष्णुर्
दु खापहार युधि यो विधत्ते ॥ ५० ॥
महाहवे नाथ तवास्य सूनो
शस्त्रै शितै कृत्तशिरोधराणाम् ।
महासुराणा रमणीविलापैर्
दिशो दशाना मुखरीभवन्तु ॥ ५१ ॥
महारणक्षोणिपशूपहारी-
कृतेऽसुरे तत्र तवात्मजेन ।
बन्दिस्थिताना सुदृशा करोतु
वेणीप्रमोक्ष सुरलोक एष ॥ ५२ ॥

So T except in अस्मासु—
Bh., G क्लान्तत्राणस्य यावत्
सुहृन्महं तस्य पराभव तम् । Rest as ours

49 Sloka omitted by T, Vi *c* So Bh., G, others सुनन्दन. *d* Bh., G —सैन—

50 *a* Bh.—लक्ष्मीहृदयैकशल्य *c* Vā-2 अस्माकमेषा पुरतो भवन् सन् *d* Bh., G —हार सुविधा विधाता

51. *b* G, Bh. शस्त्रैः शरैः कृत्त—

52 *a* Vi —पशूपहारे कृते, T —रणक्षोणिपशूपहारे कृते— *d* T, Vi, Bh., G, S वेणिप्र—, Vā-2 वेणीप्रमाक्ष

इत्य सुरेन्द्रे वदति स्मरारि:
सुरारिदुश्चेष्टितजातरोष ।
कृतानुकम्पस्त्रिदशेषु तेषु
भूयोऽपि भूताधिपतिर्बभाषे ॥ ५३ ॥

अहो अहो देवगणा सुरेन्द्र-
मुख्या शृणुध्व वचन ममैतत् ।
विचेष्टते शकर एष देव-
कार्याय सज्ज सकल शुभाय ॥ ५४ ॥

पुरा मयाकारि गिरीन्द्रपुत्र्या
प्रतिग्रहोऽस्य नियतात्मनापि ।
तत्रैष हेतु खलु तद्भवेन
वीरेण यद् वध्यत एष शत्रु ॥ ५५ ॥

अत्रोपपन्न तदमी नियुज्य
कुमारमेन पृतनापतित्वे ।
निघ्नन्तु शत्रु सुरलोकमेष
भुनक्तु भूयोऽपि सुरं सहेन्द्र ॥ ५६ ॥

इत्युदीर्य भगवान् स्वमात्मज
घोरसगरमहोत्सवोत्सुकम् ।
नन्दनेहि जहि देवविद्विष
सयतीति निजगाद शकर ॥ ५७ ॥

54 *b* T, $V_1$—न्द्रमुखा, so Bh, others ममैते *c* Bh—शक्र एव— *d* So T, $V_1$, Bh, G—सज्ज सकलै शुभास्त्रै, Vā 2, S सज्जो भवता भुतायै

55 *c* T, $V_1$ तत्रैकहेतु *d* T, $V_1$ यद्घन्यत—

56 *a* $V_1$, T अथोपपन्न तदितो नियुज्य, Bh, G अत्रोपपन्न तदनो नियुज्य *c* $V_1$, T निहन्तु शत्रु, Bh, G निहत्य शत्रु *d* Bh, G स्वर्गेत, T, $V_1$ पुनस्तु

57 *a* Bh—भगवास्तमात्मज *c* So Bh, G, T, $V_1$, written as नन्दने हि (but is = नन्दन + इहि), S, Vā 2 नन्दन हि

शासन पशुपते स कुमार
स्वीचकार शिरसावननेन ।
सर्वथैव पितृभक्तिरतानाम्
एष एव परम खलु धर्म ॥ ५८ ॥

असुरयुद्धविधौ विबुधेश्वरे
पशुपतौ वदतीति तमात्मजम् ।
गिरिजया मुमुदे सुतविक्रमे
न किमु नन्दति सयति वीरसू ॥ ५९ ॥

सुरपरिवृट प्रौढ वीर कुमारमुमापतेर्
बलवदमरारातिर्न्निर्णा दृगञ्जनमञ्जनम् ।
जगदभयद सद्य प्राप्य प्रमोदपरोऽभवद्
ध्रुवमभिमते पूर्णे को वा मुदा न हि माद्यति ॥ ६० ॥

इति श्रीकुमारसभवे महाकाव्ये कविकालिदासकृतौ कुमाराभ्यर्थन नाम द्वादश सर्ग ॥

58 *b* Bh., G —शा विन—, so Vi and T.

59 *b* Bh., G वदति प्रियपुत्रकम्, Vi., T. वदति प्रियमात्मकम् *d* So Vi., T , Bh., G , Va-1, S नति न नन्दति वा खलु वीरसू-

60 *c* P-1, Va 2—दभयाद—, cp the use of √भञ्ज् in भङ्क्त्वा in IX, 26*b*

Colophon Bh., G इति श्रीकुमारसभवे बालाभ्यर्थन नाम द्वादश सर्ग , T, Vi. इति कुमारसभवे कुमारसेनापत्यवर्णन नाम द्वादश सर्ग , S इति श्रीकालिदासकृतौ कुमारसभवे महाकाव्ये कुमारसेनापत्यवर्णन नाम द्वादश सर्ग ।

## ॥ त्रयोदशः सर्गः ॥

प्रस्थानकालोचितचारुवेष<br>
स स्वर्गिवर्गैरनुगम्यमान ।<br>
तत कुमार शिरसानतेन<br>
त्रैलोक्यभर्तु प्रणनाम पादौ ॥ १ ॥

जहीन्द्रशत्रु समरेऽमरेश-<br>
पद स्थिरत्व नय वीर वत्स ।<br>
इत्याशिषा त प्रणमन्तमीशो<br>
मूर्धन्युपाघ्राय मुदाभ्यनन्दत् ॥ २ ॥

प्रह्वीभवन् नम्रतरेण मूर्ध्ना<br>
नमश्चकाराङ्घ्रियुग स मातु ।<br>
तस्या प्रमोदाश्रुपय प्रपूरस्<br>
तस्याभवद् वीरवराभिषेक ॥ ३ ॥

तमङ्कमारोप्य सुता हिमाद्रेर्<br>
आश्लिष्य गाढ सुतवत्सला सा ।<br>
शिरस्युपाघ्राय जगाद शत्रु<br>
जित्वा कृतार्थीकुरु वीरसू माम् ॥ ४ ॥

उद्दामदैत्येशविपत्तिहेतु<br>
श्रद्धालुचेता समरोद्धर स ।<br>
आपृच्छ्य भक्त्या गिरिजागिरीशौ<br>
तत प्रतस्थेऽभि दिव कुमार ॥ ५ ॥

1 *d* Vā 2 त्रिलोक—

3 *b* G, $V_1$ युग स्वपातु, Vā 2—युगाय मातु *c* Vā 2—पय प्रवृष्टि—, Bh —श्रुपय प्रवर्पं

4 *b* Vā 2—त्तास्या *d* Bh —कृतार्थी कुरु

5 *a* T, $V_1$ दैतेयवि— *b* So T, $V_1$, S, Vā 2, Bh समरोत्सवस्य *d* Bh —स्थे त्रिदिव—

देव महेशं गिरिजां च देवीं
तत प्रणम्य त्रिदिवौकसोऽपि ।
प्रदक्षिणीकृत्य सुरेशमुख्या
सुरा समग्रास्तमथानुजग्मु ॥ ६ ॥
अथ व्रजद्भिस्त्रिदशैरशेषै
स्फुरत्प्रभामण्डलभासुरैस्तै ।
नभो बभासे परितो विकीर्णं
दिवापि नक्षत्रगणैरिवाग्रे ॥ ७ ॥
रराज तेषां व्रजतां सुराणां
मध्ये कुमारोऽधिककान्तिशान्त ।
नक्षत्रताराग्रहमण्डलानाम्
इव त्रियामारमणो नभोऽन्ते ॥ ८ ॥
गिरीशगौरीतनयेन सार्धं
पुलोमपुत्रीदयितादयस्ते ।
उत्तीर्य नक्षत्रपथं मुहूर्तात्
प्रपेदिरे लोकमयान्यनीनम् ॥ ९ ॥
ते स्वर्गलोकं चिरकालदृष्टं
महासुरत्रासवशंवदत्वात् ।
मद्य प्रवेष्टुं न विषेहिरे तत्-
क्षणं व्यलम्बन्त सुरा समग्रा ॥ १० ॥

6 c and d So Bh. (—मिजग्मु), G, T, Vi, Va 2 कृत्य च नाथपूर्वा सुरा समस्ता—, S प्रदक्षिणीकृत्य च नाकनाथपूर्वा समस्तास्त मथानुजग्मु

7 a T, Vi—र्दौ सरोषैः b Bh., G, T, Vi स्फुरत्प्रभाभासुरमण्डलैस्तै c T, Vi तता बभासे परितोऽवकाशो दिवा—

8 b G, Bh—धिककान्तिकान्ति d T त्रियामादयिता नभान्त, so Vl, excepting नभान्ते

9 c Vi. मुहूर्तं, T agrees with ours d T, Vi—वमयो मुनीनाम्

10 a T, Vi त स्वर्ग— c Va 2, G, S, Vi, T, Bh त क्षण, T, Vi सुरा समस्ता-

पुरो भव त्व न पुरो भवामि
नाह पुरोगोऽस्मि पुर सरस्त्वम् ।
इत्थ सुरास्तत्क्षणमेव भीता
स्वर्गं प्रवेष्टु कलह वितेनु ।। ११ ।।
सुरालयालोकनकौतुकेन
मुदा शुचिस्मेरविलोचनस्य ।
दधु कुमारस्य मुखारविन्दे
दृष्टि द्विषत्साध्वसकातरा ते ।। १२ ।।
सहेलहासच्छुरिताननेन्दुस्
तत कुमार पुरतो निविष्ट ।
स तारकापातमवेक्षमाणो
रणप्रवीरोऽभि सुरानवोचत् ।। १३ ।।
भीत्यालमद्य त्रिदिवौकसोऽमी
स्वर्गं भवन्त प्रविशन्तु सद्य ।

11 *a* V1 पुरोऽस्त तत्त्व न— *c* T, V1 इत्थ द्विधा तेन कृते स्ववश्ये स्वर्गं, G, Bh इत्थ द्विधा तेन हृता मिथस्ते स्वर्गं...

12 *a* T

सुरत्वरालाकनकौतुकेन मुदा सुविस्मेरविलोचनस्य ।
दधु कातरास्ते ।

Bh agrees with ours except in *b* मुदा सुविस्मेरविलोचनान्ता read by G मुदा सविस्मेरविलोचनान्त कातरा ते, and by S मुदा शुचिस्मेरविलोचनास्ते द्विपत्साध्वसकातरान्ताम् (= कातरान्ता भीतप्रान्ताम् an illustration of how the commentators could explain anything in Sanskrit the intended reading being कातरा ताम्)

13 *a* T सहेलहासोद्धुरिता— *b* S पुरतो भविष्णु *c* S —पातमपेक्ष माणो *d* G, S —रो हि—, G agrees with ours except in हि

14 *d* S खलु दृष्टपूर्वं, T —सुरो य खलु कालदृष्ट. The use of √*damś* is familiar in this sense

अत्रैव मे दृक्पथमेतु शत्रुर्
महासुरो व खलु कालदष्ट ॥ १४ ॥
स्वर्लोकलक्ष्मीकचकर्षणाय
दोर्मण्डल वलाति यस्य चण्डम् ।
इहैव तच्छोणितपानकल्मिम्
अह्वाय कुर्वन्तु शरा ममैते ॥ १५ ॥
शक्तिर्ममासावहतप्रचारा
प्रभावसारा सुमहत्प्रसारा ।
स्वर्लोकलक्ष्मीविपदा सहारे
शिरो हरन्ती दिशतान्मुद व ॥ १६ ॥
इत्यन्धकारातिसुतस्य दैत्य-
वधाय युद्धोत्सुकमानसस्य ।
सर्वं शुचिस्मेरमुखारविन्द
गीर्वाणवृन्द वचसा ननन्द ॥ १७ ॥
सान्द्रप्रमोदात् पुलकोपगूढ
सर्वाङ्गसफुल्लसहस्रनेत्र ।
तस्योत्तरीयेण निजाम्बरेण
निरुह्ण चारु चकार शक्र ॥ १८ ॥
घनप्रमोदाश्रुपरिप्लुताक्षैर्
मुखैश्चतुर्भि प्रचुरप्रसादै ।

15 *a* G स्वर्लोकलक्ष्मी—, Bh. स्वर्गोकलक्ष्मी (=स्वर्गैक?) *b* Bh. T —ल यस्य वल्गतिचण्डम्

16 *b* G Bh. सुमहाप्रसारा *c* So Bh., G with सहारि(गिरा), Va-2, S —लक्ष्म्या विपदा— *d* T, Vi. दिशता मुख व-

17 *b* T, Vi., G —यद्धोत्सवमानसस्य *c* T, Vi., G, Bh. सुविस्मेरमुखा—

18. *a* T, Vi. सान्द्रप्रमोद पुलका— *b* T, Vi. सर्वाङ्गवल्गसहस्र— *d* So Bh., T निमन्छन, others निरुञ्छन, cp 21*c*.

19 *a* So T, Vi, others—श्रुनरङ्गिताग्रै- *b* T, Vi. प्रचुरप्रसाद- *c* G तमाचु—, T विविराब्धि— *d* T पद्मसु शिरसु— So T After this śloka T, Vi. have

क्रमाच्चुचुम्बे विधिरादिवृद्ध
षडानन षट्सु मुखेषु हर्षात् ॥ १९ ॥
त साधु साध्वित्यभित प्रशस्य
मुदा कुमार त्रिपुरासुरारे ।
आनन्दयन् वीर जयेति वाचा
गन्धर्वविद्याधरसिद्धसघा ॥ २० ॥
दिव्यर्षय शत्रुविजेष्यमाण
तमभ्यनन्दन् किल नारदाद्या ।

दिव्यर्षयस्तस्य वचो वरार्थं
तदभ्यनन्दन् किल नारदाद्या ॥ १९ ॥

T numbers from घनप्रमोदाश्रु—up to नारदाद्या as one śloka having six feet, while Vi numbers these two lines as 20th. T. goes on

तत्र सुरा शक्तिधरस्य तस्या-
वष्टम्भत साध्वसमुत्त्यजन्त ।
आनन्दयन् वीर जयेति वाचा
गन्धर्वविद्याधरसिद्धसघा ॥ २० ॥ T 21 Vi

सुसाधु साध्वित्यभित प्रशस्य
मुदा कुमार त्रिपुरासुरारे ।
निरुन्धन चक्षुरथोत्तरीयैस
चामीकरीयैर्निजवल्कलैश्च ॥ 2 ॥ 22 Vi

G reads

दिव्यर्षयस्तस्य वचो वरार्थं
समभ्यनन्दन् किल नारदाद्या ।
निरुन्धन चक्षुरथोत्तरीयैर्
चामीकरीयैर्नववल्कलैश्च ॥ २० ॥

त साधु साध्वित्यभित प्रशस्य
मुदा कुमार त्रिपुरासुरारे ।
आनन्दयन् वीर जयेति वाचा
गन्धर्वविद्याधरसिद्धसघा ॥ २१ ॥

निरुञ्छन चक्रुरथोत्तरीयैन्
चामीकरीयैर्नववल्कलैश्च ॥ २१ ॥
तत सुरा शक्तिवरस्य तस्या-
वष्टम्भत साध्वसमुन्मृजन्त ।
उल्लेहिरे स्वर्गमनन्तशक्तेर्
गन्तु वन यूयपतेरिवेभा ॥ २२ ॥
अथाग्निपृष्ठ गिरिजातनूज
पुरदरारातिवध चिकीर्षो ।
सुरा निरीयुस् त्रिपुर दिदृक्षोर्
इव स्मरारे प्रमथा समन्तात् ॥ २३ ॥
सुराङ्गनाना जलकेलिभाजा
प्रक्षालितै सततमङ्गरागै ।
प्रपेदिरे पिञ्जरवारिपूरा
स्वर्गौकस स्वर्गधुनी पुरस्तात् ॥ २४ ॥

तत सुरा शक्तिवरस्य तस्या-
वष्टम्भत साध्वसमुन्मृजन्त ।
उल्लेहिरे स्वर्गमनन्तशक्तेर्
गन्तु वन यूयपतेरिवेभा ॥ २२ ॥ So is Bh.

S agrees with our reading and order of verses

23 *a* T , Vi.—पृष्ठे *b* T , Vi.—दरारातिजय After this T., Vi have

सुराङ्गनाना जलकेलिभाजा
कराहतैर्भिन्नतरैस्तरङ्गै ।
आप्लावयन्ती मुहुरम्बराग्र-
श्रेणिं तरङ्गा त्रिदशीरजनाम् ॥

They omit *b*, *c*, *d* of 24th and *a* up to विहर—of the 25th by haplology, for obviously the eye of the scribe wandered from भाजा of 24*a* to—भाजा of 25*a* with the result that the intervening matter was dropped out So it is in Bh., and this fact alone should establish an intimacy between the two

दिग्दन्तिना वारिविहारभाजा
कराहतैर्भीमतरैस्तरङ्गैः ।
आप्लावयन्ती मुहुरालवाल-
श्रेणी तरूणां निजतीरजानाम् ॥ २५ ॥

लीलारसाभिः सुरकन्यकाभिर्
हिरण्मयीभिः सिकताभिरुच्चैः ।
माणिक्यगर्भाभिरुपोहिताभिः
प्रकीर्णतीरा वरवेदिकाभिः ॥ २६ ॥

सौरभ्यलुब्धभ्रमरोपगीतैर्
हिरण्यहंसावलिकेलिलोलैः ।
चामीकरीयैः कमलैर्विनिद्रैश्
च्युतैः परागैः परिपिङ्गतोयाम् ॥ २७ ॥

25 *a* and *b* T, $V_1$ :

दिग्दन्तिनां वारिविहारलीला
कराहतैर्भीमवराहयूथैः ।
आशासयन् सादरमद्रिपुत्री-
महेशपुत्राय पुरः पुरोगाः ॥ २४ ॥

स कार्त्तिकेयः पुरतः परीतो
वियच्चरैर्लोलतरैस्तरङ्गैः ।
आप्लावयन्ती मुहुरालवाल-
श्रेणीस्तरूणां गुरुतीरजानाम् ॥ २५ ॥

So Bh Obviously *c* and *d* of 24th and *a* and *b* of 25th are an awkward intrusion in our reading which seems original S—श्रेणि

26 *a* T, $V_1$ लोलालसाभिः, cp I, 29*d* *b* T, $V_1$ हिरण्यहंसाभिरुताभिरुच्चैः, G, Bh हिरण्यजाभिः सिकताभिरुच्चैः. *c* S, T, $V_1$—गर्भाभिरुपाहिताभिः, others agree with $V_2$ 2. *d* G—तीराम्बरवेदिकाभिः

27 *a* T, $V_1$—भ्रमरावकीर्णैः. *d* T, $V_1$ परिपिञ्जतोयाम्

कुतूहलाद् द्रष्टुमुपागताभिस्
तीरस्थिताभि सुरसुन्दरीभि ।
अम्बूर्मिराजिप्रतिबिम्बिताभिर्
मुद दिनन्ती व्रजता जनानाम् ॥ २८ ॥

ननन्द सद्यश्चिरकालदृष्टा
विलोक्य शक्र सुरदीर्घिका ताम् ।
अदर्शयत् सादरमद्रिपुत्री-
महेशपुत्राय तत पुरोग ॥ २९ ॥

स कार्त्तिकेय पुरत परीत
सुरै समस्तै सुरनिम्नगा ताम् ।
अपूर्वदृष्टामवलोकमान
सविस्मय स्मेरविलोचनोऽभूत् ॥ ३० ॥

उपेत्य ता रत्नकिरीटकोटि-
न्यस्ताञ्जलिर्भक्तिपर कुमार ।
गीर्वाणवृन्दै प्रणुता प्रणुत्य
नम्रेण मूर्ध्ना मुदितो ववन्दे ॥ ३१ ॥

प्रणर्तितस्मेरसरोजराजि
पुर परीरम्भमिलन्महोर्मि ।

28. *b* So Bh., others तीरे स्थिताभि , T, Vi. सुरकन्यकाभि. *c* G., Bh. अम्बूर्मिराजि—, Vi. अम्बूर्मिराजी—

29 So Vā-2, P I, Bh., G, S, T., Vi. read

ननन्द शक्रश्चिरकालदृष्टा
विलोक्य सद्य सुरदीर्घिका ताम् ।
अपूर्वदृष्टामिव लोकमान
स विस्मयस्मेरविलोचनोऽभूत् ॥ २१ ॥

Cp note on 25th for confused reading of *c* and *d* of 29th and *a* and *b* of 30th.

31. *c* Bh., G प्रणता *d* T, Vi. नमितो, G, Bh. प्रणतो

32. *a* Bh. प्रनर्तित, T, Vi. प्रघाटितस्मेर— *d* Vā-2, S —गूढ व सरित—, others as our text

कपोलपालिश्रमवारिहारी
भेजे गुहं स्व सरितं समीरः ॥ ३२ ॥
ततो व्रजन् नन्दननामधेयं
लीलावनं जम्भजितः पुरस्तात् ।
विभिन्नभग्नोद्धतशालसंघं
प्रेक्षांचकार स्मरशत्रुसूनुः ॥ ३३ ॥
सुरद्विषोपप्लुतमेवमेतद्
वनं बलस्य द्विषतो गतश्रि ।
इत्थं विचिन्त्यारुणलोचनोऽभूद्
भ्रूभङ्गदुष्प्रेक्ष्यमुखः स कोपात् ॥ ३४ ॥
निर्लूनलीलोपवनामपश्यद्
दुःसचरीभूतविमानमार्गाम् ।
विध्वस्तसौधप्रचया प्रमृष्ट-
वास्त्वेकसाराममरावतीं सः ॥ ३५ ॥
गतश्रियं वैरिवराभिभूतां
दशां सुदीनामभितो दधानाम् ।
नारीमवीरामिव तामवेक्ष्य
स गाढमन्तः करुणापरोऽभूत् ॥ ३६ ॥
दुश्चेष्टिते देवरिपौ सरोषस्
तस्या विषण्णः समराय चोत्कः ।
तथाविधां तां स विवेश पश्यन्
पुरं सुराधीश्वरराजधानीम् ॥ ३७ ॥

33 *a* T, Vi ततो जवान्नन्दन— *b* Bh —वज्रभृत पुर— *c* So Vā 2, S —भग्नोद्धतशाल—, Bh, T, Vi —भग्नोन्नतशाखिसंघ (= —संघ G) For *d* cp III, 71

35 *b* T, Vi, Bh, G असंचरीभूत— *c* and *d* So Bh, G, T, Vi विध्वस्तसौध्यप्रचया प्रमृष्टविश्वैकसारा—, Vā 2, S —सौधप्रचया कुमारो विश्वैकसाराम—, cp Rv XVI, 10*a* वास्तु = house

36 *a* T, Vi गर्भश्रियं, Bh गतश्रियं वैरिपराभि—, G गतश्रियं वैरिवराभि— *d* So T, Vi, others गाढ—, Bh, G सबाष्पमन्तः—

